| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विकम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| श्रीकृष्णजन्मखंडो - उत्तरार्धं | - | पुराण | पूर्ण | - | ७/12 | 298 | संस्कृत | कागद | 14 | 49 | | |

M-3026

श्रीगणेशायनमः ॥ ॥ सएवंभगवान्कृष्णःसर्वात्मापुरुषःपरः ॥ दुराराध्योतिसाध्यश्चसर्वाराध्यःसुखप्रदः ॥ १ ॥ निजभ
क्तातिसाध्यश्चभक्तस्याराध्यएवच ॥ शश्वद्दृश्यःस्वभक्तस्याभक्तस्यादृश्यएवच ॥ २ ॥ दुर्ज्ञेयंतस्यचरितंकार्यत्वद्दपमेव
च ॥ बद्धास्तन्मायया सर्वेमोहिताश्चदुरंतया ॥ ३ ॥ यद्भयाद्वातिवातोयंकूर्मोधत्तेनिराश्रयः ॥ कूर्मोनंतंबिधत्तेचयद्भयेननिरंत
रम् ॥ ४ ॥ बिभर्तिशेषोविश्वंचयद्भयेनचनारद ॥ सहस्रशीर्षापुरुषःशिरस्यैकदेशतः ॥ ५ ॥ सप्तसागरसंयुक्तासप्तद्वीपावसु
धरा ॥ शैलकाननसंयुक्तापातालाःसप्तएवच ॥ ६ ॥ सप्तस्वर्गाश्वविविधाब्रह्मलोकसमन्विताः ॥ एवंविश्वंत्रिभुवनंकृत्रिमंप
रिकीर्तितम् ॥ ७ ॥ यद्भयेनविधात्राचप्रतिसृष्टौचनिर्मितम् ॥ एवंविश्वान्यसंख्यानिलोमकूपैर्महान्विराट् ॥ ८ ॥ यद्भयेन
विधत्तेचयदंशोध्यायतेंद्रियम् ॥ विष्णुःपातिचसंसारंयद्भयेनकृपानिधिः ॥ ९ ॥ कालाग्निरुद्रोयद्भीतःकालःसंहरतेप्रजाः ॥
मृत्युंजयोमहादेवोयद्भयाद्ध्यायतेचयम् ॥ १० ॥ षड्गुणैरनुरागैश्चविरागीविरतःसदा ॥ यद्भयेनदहत्यग्निःसूर्यस्तपतिय
द्भयात् ॥ ११ ॥ यद्भयाद्वर्षतींद्रश्चमृत्युश्चरतिजंतुषु ॥ यद्भयेनयमःशास्तापापिनांधर्मएवच ॥ १२ ॥ धत्तेचधरणीलोकान्
यद्भयेनचराचरान् ॥ सूयतेप्रकृतिःसृष्टौयद्भयान्महदादिकम् ॥ १३ ॥ दुर्ज्ञेयंतदभिप्रायंकोवाजानातिपुत्रक ॥ यत्प्रभावंन
जानंतिब्रह्मविष्णुमहेश्वराः ॥ १४ ॥ कथंजानामितच्चेष्टामहंवत्ससुमंदधीः ॥ कथंजगाममथुरांत्यक्त्वावृंदावनंवनम् ॥
॥ १५ ॥ कथंतत्याजगोपीश्चराधांप्राणाधिकांप्रियाम् ॥ यशोदांबांधवादींश्चनंदंवानंदनंदनः ॥ १६ ॥ दर्पहादर्पदःसोपिसर्वे
षांसर्वदःसदा ॥ बभंजराधादर्पंचसुदाम्नःशापकारणात् ॥ १७ ॥ अन्येषांभावनाहेतोर्ब्रह्मप्राप्तिस्तथाभवेत् ॥ एवंकिंचिद्धित
केचकुरुतेकमलोद्भवः ॥ १८ ॥ चकारदर्पभंगंचमहाविष्णुःपुराविभुः ॥ ब्रह्मणश्चतथाविष्णोःशेषस्यचशिवस्यच ॥ १९ ॥ ध

र्मस्यचयमस्यापिसांबस्यचंद्रसूर्ययोः ॥ गरुडस्यचवन्हेश्चगुरोर्दुर्वाससस्तथा ॥ २० ॥ दौवारिकस्यभक्तस्यजयस्यविजय
स्यच ॥ सुराणामसुराणांचभवतःकामशक्रयोः ॥ २१ ॥ लक्ष्मणस्यार्जुनस्यापिबाणस्यचभृगोस्तथा ॥ सुमेरोश्चसमुद्रा
णांवायोश्चवरुणस्यच ॥ २२ ॥ सरस्वत्याश्चदुर्गायाःपद्मायाश्चभुवस्तथा ॥ साबित्र्याश्चैवगंगायामनसायास्तथैवच ॥ २३ ॥
प्राणाधिष्ठातृदेव्याश्चप्रियायाःप्राणतोपिच ॥ प्राणाधिकायाराधायाअन्येषामपिकाकथा ॥ २४ ॥ हृत्वादर्पंचसर्वेषांप्रसा
दंचचकारसः ॥ कर्ताहर्तापालयितास्रष्टास्रष्टुश्चसर्वतः ॥ २५ ॥ यंस्तोतुमीशोनालंचपंचवक्त्रेणशंकरः ॥ स्तोतुंनालंचतुर्वक्त्रो
विधाताजगतामपि ॥ २६ ॥ स्तोतुंनालमनंतश्चसहस्रवदनैरहो ॥ स्वयंविष्णुर्विश्वव्यापीनालंस्तोतुंजनार्दनः ॥ २७ ॥ म
हाविराण्नशक्तोपियंस्तोतुंपरमेश्वरम् ॥ कंपितायस्यपुरतःप्रकृतिःपरमात्मनः ॥ २८ ॥ सरस्वतीजडीभूतायंस्तोतुंपरमे
श्वरम् ॥ महिमानंनजानंतिवेदायस्यचनारद ॥ २९ ॥ इत्येवंकथितोब्रह्मन्प्रभावःपरमात्मनः ॥ निर्गुणस्यचकृष्णस्यकिं
भूयःश्रोतुमिच्छसि ॥ ३० ॥ ॥ इतिश्रीब्रह्मवैवर्त्तेमहापुराणेश्रीराधाकृष्णसंवादेश्रीकृष्णप्रभाववर्णनंनामपंचपंचाशत्तमो
ऽध्यायः ॥ ५५ ॥ ॥ नारदउवाच ॥ ॥ किमपूर्वंश्रुतंब्रह्मन्रहस्यंपरमाद्भुतम् ॥ अनंतचरितंधन्यमनंतस्याच्युतस्यच ॥ १ ॥
कथंकृष्णोमहाविष्णोर्दर्पभंगंचकारसः ॥ अन्येषांवाकथमहोतद्भवान्वक्तुमर्हति ॥ २ ॥ स्वतःश्रीकृष्णचरितमतीवमधुरंश्रु
तौ ॥ अतीवमधुरंरम्यंकाव्यंकविमुखात्ततः ॥ ३ ॥ ॥ श्रीनारायणउवाच ॥ ॥ महाविष्णोरहंकारोबभूवसहसेतिच ॥ सर्वम
ल्लोमकूपेषुविश्वान्येवाहमीश्वरः ॥ ४ ॥ संहारेभैरवोभूत्वातंजग्रासससलीलया ॥ स्थितौमूर्ध्नामशेषेचप्रसादंतंचकारसः ॥ ५ ॥
सर्वात्मानंध्यायमानंस्तुतंभीतंकृपानिधिः ॥ तच्छरीरंसुसंपन्नंपुनरेवचकारसः ॥ ६ ॥ ब्रह्मणःसहसाब्रह्मान्नितिदर्पोबभूवह ॥

अहंत्रिजगतांधाताकर्ताहमीश्वरःस्वयम् ॥ ७ ॥ मत्परःपूजितोनास्तिमत्परःपूजितेंद्रियः ॥ इत्येवंमनसाकृत्वाबहुदर्पोब
भूवह ॥ ८ ॥ गोलोकेस्वसमीपेचवसंतंपुरतोविभोः ॥ पंचवक्रंचतुर्वक्रंषड्वक्रंचततोधिकम् ॥ ९ ॥ शतवक्रंचप्रत्यंकंब्रह्मां
डौघंचलीलया ॥ त्यक्तुकामंस्वदेहंचव्रीडयानतकंधरम् ॥ १० ॥ पुनःप्रसादंकृपयातंचकारकृपानिधिः ॥ कालेनमोहिनी
द्वारातमपूज्यंचकारसः ॥ ११ ॥ स्वकन्यांदर्शयित्वातंसकामंचचकारह ॥ पुनस्तद्दर्पभंगंचाशिवद्वाराचकारसः ॥ १२ ॥ त
त्याजलज्जयादेहंपुनर्देहंदधारसः ॥ पुनश्चकारतंपूज्यंब्रह्माणंब्रह्मणःप्रभुः ॥ १३ ॥ ज्ञानंददौमहाज्ञानीज्ञानानंदःसनात
नः ॥ विष्णोर्बभूवगर्वश्चजगत्पाताहमीश्वरः ॥ १४ ॥ तमात्मविस्मृतंकृष्णश्चकाररामजन्मनि ॥ अहंविश्वंबिभर्मीतिशेषद
र्पोबभूवह ॥ १५ ॥ तद्दर्पंगरुडद्वाराचूर्णीभूतंचकारसः ॥ एकदापूजितोनागैर्गरुडःकृष्णवाहनः ॥ १६ ॥ नपूजितश्चशेषेण
स्वदर्पेणपुरामुने ॥ गरुडेनजितंक्रोधात्तमनंतंमनस्विनम् ॥ १७ ॥ चकारमोक्षणंतस्यश्रीकृष्णश्चकृपानिधिः ॥ स्वयंशिवः
स्वदर्पाच्चविवाहंनचकारसः ॥ १८ ॥ तंकृत्वामाययामोहंकारयामासस्त्रीयुतम् ॥ पुनर्जहारपत्नींचदक्षकन्यांमहासतीम् ॥
॥ १९ ॥ वर्षंशुशोचतद्देहंक्रोडेकृत्वाचशंकरः ॥ नानास्थानंचबभ्रामरुदन्शोकान्मुहुर्मुहुः ॥ २० ॥ जन्मांतरेपुनःप्राप्यतांस
तींपार्वतींमुदा ॥ विसस्मारचस्वज्ञानंदक्षशप्तःपुनःशिवः ॥ २१ ॥ पुनश्चांगिरसद्वारास्मारयामाससत्वरम् ॥ एकदासरथः
शंभुःप्रेरितस्त्रिपुरेपुरा ॥ २२ ॥ हत्वादैत्यंशिवद्वारात्रिपुरारिंचकारतम् ॥ सर्वेवरंचसर्वस्मैदातुंशंभुःकृपानिधिः ॥ २३ ॥ स्व
यंकल्पतरुर्भूत्वाप्रतिज्ञांचचकारसः ॥ वृकासुरोऽनुष्ठानंचकृत्वावव्रेवरंविभुम् ॥ २४ ॥ दास्यामिहस्तंयन्मूर्ध्निभस्मसाद्भव
तुक्षणात् ॥ जगादजगतांनाथईप्सितंतेभविष्यति ॥ २५ ॥ इतिलब्ध्वावरंरुद्रात्गच्छंतंशंकरंविभुम् ॥ हस्तंदातुंचतन्मू

र्धिंप्राधावत्सत्वरं पुरा ॥ २६ ॥ अतीवभीतःशंभुश्च जगामशरणंहरिम् ॥ भगवांश्चशिवस्यार्थेदैत्यंभस्मचकारसः ॥ २७ ॥ शि
वंयुद्धंचकुर्वंतंबाणंयुद्धेपुराविभुः ॥ लीलयाजृंभणास्त्रेणजडीभुतंचकारसः ॥ २८ ॥ समागतंदक्षयज्ञेशंभुंदंभेनलीलया ॥
वारयामासभगवान्हस्तंदत्वाचतत्स्थले ॥ २९ ॥ केदारकन्यकाद्वाराशप्तोधर्मोतिदैवतः ॥ बभूवातिकृशोभीतःकुण्हामेवयथा
शशी ॥ ३० ॥ तदातस्यचशापांतेसत्येपूर्णोबभूवह ॥ त्रिपाद्बभूवत्रेतायांद्वापरेचद्विपादिति ॥ ३१ ॥ एकपाच्चकलौसोऽपि
कलेरंतेपुनःक्षयः ॥ षोडशांशोतिकृष्टश्चसस्मारचरणंविभोः ॥ ३२ ॥ तदासत्ययुगारंभेपरिपूर्णोभवत्पुनः ॥ पुनर्युगानुरोधे
नक्रमेणचपुनःक्षयः ॥ ३३ ॥ यमोमांडव्यशापेनशूद्रयोनिमवापह ॥ तदापुनःशताब्दांतेपुनःशुद्धोबभूवह ॥ ३४ ॥ सांबोवि
मातृशापेनगलत्कुष्ठीबभूवसः ॥ चंद्रोदर्पमदेनैवजहारचगुरोःप्रियाम् ॥ ३५ ॥ बभूवदर्पभंगोस्ययक्ष्मग्रस्तोबभूवसः ॥
सूर्योदर्पात्तेजसश्चहंतुंशंकरकिंकरं ॥ ३६ ॥ सुमालीत्यभिधंदैत्यंजगामाशुगिरिंप्रति ॥ अहर्निशंदीप्तिकरंकुर्वंतंविषयंरवेः
॥ ३७ ॥ सूर्येणभीतोदैत्यश्चशंकरंशरणंययौ ॥ सूर्यंदृष्ट्वाशंकरश्चजग्राहशूलमेवच ॥ भीतोदुद्रावसूर्यश्चदृष्ट्वातंशूलिनंमुने ३८
जघानकाश्यांशूलेनशूलीकाशीश्वरोरविः ॥ मूर्च्छांसंप्राप्यशूलेनदर्पभंगोबभूवह ॥ ३९ ॥ सांद्रांधकारःसहसाजग्राहपृ
थिवीतलम् ॥ आशुतोषोमहादेवोजीवयामासतत्क्षणम् ॥ ४० ॥ तुष्टावशंकरंसूर्योलज्जितोपिभयेनच ॥ कृत्वातमाशिषंतु
ष्टोययौगेहंकृपानिधिः ॥ ४१ ॥ विभुर्गरुत्मतोदर्पबभंजलीलयापुरा ॥ निःश्वासैःप्रेरितस्यापिशिवस्यवृषभस्यच ॥ ४२ ॥
आगच्छतश्चवैकुंठंपृष्ठेकृत्वाशिवंपुरा ॥ द्रष्टुंसमागतंभक्त्यादेवंनारायणंपरम् ॥ ४३ ॥ वन्हिर्दर्पाद्भृगोःशापात्सर्वभक्षोब
भूवह ॥ गुरोःस्वभार्याहरणाद्दर्पश्चूर्णोबभवह ॥ ४४ ॥ दुर्वाससोदर्पभंगोबभूवद्व्यंबरीषतः ॥ सुदर्शनेनचक्रेणविष्णोर्दुर्विष

हेणच ॥ ४५ ॥ जयस्यविजयस्यापिदर्पभंगंचकारसः ॥ वैकुंठात्पतितस्यापिब्रह्मशापच्छलेनच ॥ ४६ ॥ नृसिंहेणहतः
सोपिहिरण्यकशिपुर्यथा ॥ सूकरेणहिरण्याक्षोलीलयाचरसातले ॥ ४७ ॥ रावणःकुंभकर्णश्चनिहतौरामबाणतः ॥ जन्मां
तरेचलंकायांब्रह्मणाप्रार्थितस्यच ॥ ४८ ॥ शिशुपालोहिनिहतःकृष्णबाणेनलीलया ॥ दंतवक्त्रश्चसहसापरिपूर्णेत्रजन्मनि
॥ ४९ ॥ सुराणांदर्पभंगंचदैत्यद्वाराचकारह ॥ असुराणांसुरद्वाराविरोधेनपरस्परम् ॥ ५० ॥ विधिद्वारादर्पभंगंभवतश्चच
कारसः ॥ भवानासीन्नारदश्चपुरापुत्रःप्रजापतेः ॥ ५१ ॥ गंधर्वश्चपितुःशापात्शूद्रीपुत्रस्ततःक्रमात् ॥ ततःपुनर्नारदश्चप्र
सादादधुनाविभोः ॥ ५२ ॥ ममसाध्यंविश्वमितिकामदर्पोबभूवह ॥ तंप्रमत्तंहरद्वाराभस्मसाच्चचकारसः ॥ ५३ ॥ पुनःकृत्वा
प्रसादंतंजीवयामासलीलया ॥ एकांतिकंचतद्भक्तंसचनास्वंकरोतिहि ॥ ५४ ॥ चकारदर्पभंगंचदर्पिणोलक्ष्मणस्यच ॥ र
णेशंकरशूलेनरावणप्रेरितेनच ॥ ५५ ॥ पुनस्तंजीवयामासरामस्यस्तवनेनच ॥ स्वयंविस्मृतविष्णोश्चब्रह्मशापेननारद ॥
॥ ५६ ॥ चकारदर्पभंगंचकार्तवीर्यार्जुनस्यच ॥ जामदग्न्यस्यशस्त्रेणामोघेनपरशुनापुरा ॥ ५७ ॥ विप्रपुत्रस्यमरणेहरणे
कृष्णयोषिताम् ॥ कर्णेनसार्द्धंसमरेपार्थदर्पबभंजसः ॥ ५८ ॥ बाणस्यचोषाहरणेचिच्छेदचभुजान्विभुः ॥ भृगोश्चदक्षयज्ञे
चदर्पभंगंचकारसः ॥ ५९ ॥ परशुरामस्यरामस्यविवाहेपथिगच्छतः ॥ बभंजदर्पंसमरेरामद्वारापुराविभुः ॥ ६० ॥ सुमेरोःशृं
गभंगंचवायुद्वाराचकारसः ॥ समुद्राणांदर्पभंगंचकारागस्त्यभक्षणात् ॥ ६१ ॥ अकालेसृष्टिहरणेतत्पुत्रमरणेपुरा ॥ को
पयुक्तस्यवायोश्चदर्पभंगंचकारसः ॥ ६२ ॥ उषाहरणयात्रायांद्वारकागमनेहरेः ॥ बाणस्यचगवांहेतोर्वरुणंचशशापसः ६३
कलहेगंगयासार्द्धंवाण्यानारायणाग्रतः ॥ सरस्वतींचतत्त्याजतस्यादर्पबभंजसः ॥ ६४ ॥ दर्पयुक्तांचदुर्गांचत्यक्त्वाशंभुर्हि

मालये ॥ कामंचभस्मसात्कृत्वातपसेचययौविभुः ॥ ६५ ॥ लज्जामवापसादेवीतस्यादर्पप्रभंजसः ॥ सायथौतपसे
विष्णोःप्राप्तिहेतोःशिवस्यच ॥ ६६ ॥ आस्तेसुचिरंतस्त्वादेवीविष्णोर्वरेणच ॥ चकारस्वामिनंशंभुंभगवंतंसनातनम् ॥ ६७
सहसौभाग्ययुक्तासाबभूवशंकरप्रिया ॥ विश्वेषुसर्वदेवीषुपूज्यावंद्यास्तुतासुरैः ॥ ६८॥ दर्पयुक्तामहालक्ष्मीर्बभूवसामहा
मुने ॥ पराभूतापुरादेवीजयेनविजयेनच ॥ ६९ ॥ प्रविशंतीविभोर्द्वारंदत्वाभक्तायवांछितम् ॥ निवारितासाद्वाराच्चतेन
दौवारिकेणवै ॥ ७० ॥ यदात्मनस्तिरस्कारंसाभिमानामहासती ॥ दृष्ट्वाहरेःपादपद्मंदेहंत्यक्तुंसमुद्यता ॥ ७१ ॥ तदाब्र
ह्मामहेशश्चविष्णुर्धर्मश्चभास्करः ॥ चंद्रश्चकामदेवश्चवैश्वानरोधनेश्वरः ॥ ७२ ॥ ऋषयोमुनयश्चैवमनवोविघ्ननायकाः ॥
महेंद्रोवरुणश्चैवजगत्प्राणोहुताशनः ॥ ७३ ॥ समाययूरुदंतस्तेपद्मायाःपुरतःपुरः ॥ तुष्टुवुश्चमहालक्ष्मींमूलप्रकृतिमीश्व
रीम् ॥ ७४ ॥ ॥ देवाऊचुः ॥ ॥ क्षमस्वभगवत्यंबक्षमाशीलेपरात्परे ॥ शुद्धसत्वस्वरूपेचकोपादिपरिवर्जिते ॥ ७५ ॥ उपमे
सर्वसाध्वीनांदेवीनांदेवपूजिते ॥ त्वयाविनाजगत्सर्वंमृततुल्यंचानिष्फलम् ॥ ७६ ॥ सर्वसंपत्स्वरूपात्वंसर्वेषांसर्वरूपिणी ॥
रासेश्वर्यधिदेवित्वंत्वत्कलाःसर्वयोषितः ॥ ७७ ॥ कैलासेपार्वतीत्वंचक्षीरोदेसिंधुकन्यका ॥ स्वर्गेचस्वर्गलक्ष्मीस्त्वंमर्त्य
लक्ष्मीश्चभूतले ॥ ७८ ॥ वैकुंठेचमहालक्ष्मीर्देवदेवीसरस्वती ॥ गंगाचतुलसीत्वंचसावित्रीब्रह्मलोकतः ॥ ७९ ॥ कृष्णप्रा
णाधिदेवीत्वंगोलोकेराधिकास्वयम् ॥ रासेरासेश्वरीत्वंचवृंदावनवनेवने ॥ ८० ॥ कृष्णप्रियात्वंभांडीरेचंद्राचंदनकानने ॥
विरजाचंपकवनेशतशृंगेचसुंदरी ॥ ८१ ॥ पद्मावतीपद्मवनेमालतीमालतीवने ॥ कुंददंतीकुंदवनेसुशीलाकेतकीवने ॥ ८२ ॥
कदंबमालात्वंदेवीकदंबकाननेपिच ॥ राजलक्ष्मीराजगेहेगृहलक्ष्मीर्गृहेगृहे ॥ ८३ ॥ इत्युक्त्वादेवताःसर्वेमुनयोमनवस्त

था ॥ रुरुदुर्नम्रवदनाःशुष्ककंठोष्ठतालुकाः ॥ ८४ ॥ इतिलक्ष्मीस्तवंपुण्यंसर्वदेवैःकृतंशुभं ॥ यःपठेत्प्रातरुत्थायसवैसर्वंल
भेत्ध्रुवं ॥ ८५ ॥ अभार्योलभतेभार्यांविनीतांचसुतांसतीं ॥ सुशीलांसुंदरींरम्यांअतिसुप्रियवादिनीं ॥ ८६ ॥ पुत्रपौत्रवतीं
शुद्धांकुलजांकोमलांवरां ॥ अपुत्रोलभतेपुत्रंवैष्णवंचिरजीविनं ॥ ८७ ॥ परमैश्वर्ययुक्तंचविद्यावंतंयशस्विनं ॥ भ्रष्टराज्यो
लभेद्राज्यंभ्रष्टश्रीलभतेश्रियं ॥ ८८ ॥ हतबंधुर्लभेद्बंधुंधनभ्रष्टोधनंलभेत् ॥ कीर्तिहीनोलभेत्कीर्तिंप्रतिष्ठांचलभेत्ध्रुवं ॥ ८९ ॥
सर्वमंगलदंस्तोत्रंशोकसंतापनाशनं ॥ हर्षानंदकरंशश्वद्धर्ममोक्षसुहृत्प्रदं ॥ ९० ॥ ॥ इतिश्रीब्रह्मवैवर्तेम० श्रीकृष्णज०
भगवद्गुणवर्णनेलक्ष्मीस्तोत्रकथनंनामषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ नारायणउवाच ॥ ॥ देवानांस्तवनंश्रुत्वा
त्यक्त्वाचरोदनंसती ॥ उवाचसुप्रसन्नातान्तेषांस्तोत्रेणनारद ॥ १ ॥ ॥ महालक्ष्मीरुवाच ॥ ॥ त्यजामिदेहंनक्रोधा
न्नवैराग्येणसांप्रतं ॥ इदंत्वदिसमालोच्यदेवास्तच्छ्रुयतामिति ॥ २ ॥ यस्मिन्सदीशेमहतिसर्वसाम्येचनिर्गुणे ॥ सर्वात्मनिस
दानंदेसमतातृणशैलयोः ॥ ३ ॥ भ्रूभंगलीलयालक्ष्मीर्लक्षंस्रष्टुमलंचयः ॥ भृत्यस्त्रियांयत्समताकिंकार्यंतस्यसेवया ॥ ४ ॥
तत्पत्नीनांप्रधानाहंनिरस्ताद्वारिणाधुना ॥ तद्भृत्यभृत्यभृत्येनपरिपूर्णेननेप्सिता ॥ ५ ॥ त्यक्ष्यामिजीवनमहमसौभाग्या
चस्वामिनि ॥ वह्नौचकामनांकृत्वायथाभद्रंभवेत्पुरा ॥ ६ ॥ यास्त्रीभर्तुरसौभाग्यासासौभाग्याचसर्वतः ॥ शयनेभोजनेतस्या
नसुखंजीवनंवृथा ॥ ७ ॥ यस्यानास्तिप्रियप्रेमतस्याजन्मनिरर्थकं ॥ तत्किंपुत्रधनेरूपेसंपत्तौयौवनेथवा ॥ ८ ॥ यद्भक्ति
र्नास्तिकांतेचसर्वप्रियतमेपरे ॥ साशुचिर्धर्महीनाचसर्वकर्मविवर्जिता ॥ ९ ॥ पतिर्बंधुर्गतिर्भर्तादैवतंगुरुरेवच ॥ सर्वस्माच्च
परस्वामीनगुरुःस्वामिनःपरः ॥ १० ॥ पितामातासुतोभ्राताक्लिष्टाधातुमिदंधनम् ॥ सर्वस्वदातास्वामीचमूढानांपोषितांसु

रा: ॥ ११ ॥ काचिदेवहिजानातिमहासाध्वीचस्वामिनं ॥ अतिसद्वंशजाताचसुशीलाकुलपालिका ॥ १२ ॥ असद्वंशप्रसूता
यादु:शीलाधर्मवर्जिता ॥ मुखदुष्टायोनिदुष्टापतिंनिंदतिकोपत: ॥ १३ ॥ यास्त्रीसर्वपरंद्वेष्टिपतिंविष्णुसमंगुरुम् ॥ कुंभीपा
केपचतिसायावदिंद्राश्चतुर्दश ॥ १४ ॥ व्रतंचानशनंदानंसत्यंपुण्यंतपश्चिरम् ॥ पतिभक्तिविहीनायाभस्मीभूतंनिरर्थकं ॥ १५
अत:किंचिन्नवक्ष्यामिनिष्ठुरंपतिमीश्वरं ॥ भृत्यापराधैर्देवस्यप्राणांस्त्यक्ष्यामिनिश्चितं ॥ १६ ॥ पतिदोषेमहासाध्वीपतिं
चानिष्ठुरंवदेत् ॥ यदिसोढुमशक्ताचप्राणांस्त्यजातिधर्मत: ॥ १७ ॥ पतिसेवाव्रतंस्त्रीणांपतिसेवापरंतप: ॥ पतिसेवापरोधर्म:
पतिसेवासुरार्चनं ॥ १८ ॥ पतिसेवापरंसत्यंदानतीर्थानुकीर्तनं ॥ सर्वदेवमय:स्वामीसर्वदेवमय:शुचि: ॥ १९ ॥ सर्वपुण्यस्व
रूपश्चपतिरूपीजनार्दन: ॥ यासतीभर्तुरुच्छिष्टंभुंक्तेपादोदकंसदा ॥ २० ॥ तस्यादर्शमुपस्पर्शंनित्यंवांछंतिदेवता: ॥ तत:स
र्वाणितीर्थानिपुनंतिपापिनोत्यघात् ॥ २१ ॥ इत्युक्त्वाचमहासाध्वीरुरोदचमुहुर्मुहु: ॥ उवाचब्रह्माभीतश्चभक्तिनम्रात्मकं
धर: ॥ २२ ॥ ॥ ब्रह्मोवाच ॥ भविष्यतिनभद्रंचजयस्यविजयस्यच ॥ त्वयानशप्तौतौमूढौप्रियापराधभीतया ॥ २३ ॥
सापराधंवधर्मिष्ठ:क्षमयानाशपेद्यदि ॥ सर्वनाशोभवेत्तस्यनिश्चितंमाचिरंसति ॥ २४ ॥ यदिशप्तुंनशक्तश्चनदंडंकर्तुमीश्व
र: ॥ सापराधेचपुरुषेधर्मोदंडंकरोतिच ॥ २५ ॥ सर्वंक्षमस्वहेमातर्गच्छगच्छप्रियांतिकं ॥ मांचत्वत्स्वामिनोभक्तंनियोज्य
सृष्टिकर्मणि ॥ २६ ॥ इत्युक्त्वातांपुरस्कृत्वासार्द्धंदेवैर्मुनींद्रकै: ॥ शीघ्रंजगामवैकुंठंवैकुंठस्तोतुमीश्वर: ॥ २७ ॥ तत्रगत्वा
जगन्नाथंतुष्टावकमलासन: ॥ चतुर्वक्त्रैश्चतुवक्त्रश्चतुर्वेदविदांगुरुं ॥ २८ ॥ ब्रह्मणस्तवनंश्रुत्वादृष्ट्वालक्ष्मींपुर:सरां ॥ रुदं
तींनम्रवदनामुवाचकमलापति: ॥ २९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ सर्वंजानामिसर्वज्ञ:सर्वात्मासर्वपालक: ॥ सर्वं

शास्ताचसर्वादिकारणकमलोद्भव ॥ ३० ॥ भक्तेकलत्रेबंधौचसर्वत्रसमताम्मम ॥ विशेषतोतिमद्भक्तःकलत्रात्परएवच
॥ ३१ ॥ मद्भक्तौतवपुत्रौचद्वारपालौदुरंतकौ ॥ क्षममामपराधंचतपोश्वभक्तिपूर्णयोः ॥ ३२ ॥ मद्भक्तिपूर्णोबलवान्दैत्ये
भ्योनबिभेतिच ॥ रक्षितोममचक्रेणभक्तिमाध्वीकदुर्मदः ॥ ३३ ॥ इत्युक्त्वाजगतांनाथोलक्ष्मींकृत्वारववक्षसि ॥ समानि
यद्वारपालंतमुवाचेदमेवच ॥ ३४ ॥ माभैर्वत्ससुखंतिष्ठभयंकिंतेमयिस्थिते ॥ मद्भक्तानांचकःशास्तागच्छवत्सात्मनःपदं
॥ ३५ ॥ इत्युक्त्वाभगवांस्तत्रविराममहामुने ॥ ययुर्देवाश्वस्वस्थानंप्रणम्यजगदीश्वरं ॥ ३६ ॥ नारायणवचःश्रुत्वाद्वार
पालउवाचतं ॥ पुलकांचितसर्वांगोभक्तिनम्रात्मकंधरः ॥ ३७ ॥ जयउ० ॥ नाहंबिभेमिदेवांश्वलक्ष्मींमुनिगणांस्तथा ॥
त्वदीयचरणांभोजध्यानैकतानमानसः ॥ ३८ ॥ इतिश्रीब्र०म०श्रीकृष्णज०वैराग्यमोचनंनामसप्तपंचाशत्तमोऽध्यायः ॥
॥ ५७ ॥ ॥ श्रीनारायणउवाच ॥ ॥ बभूवदर्पःपृथ्व्याश्वसर्वाधाराहमेवच ॥ पृथुद्वाराचतद्दर्पंजघानचैवतत्प्रभुः ॥ १ ॥ बभू
वदर्पःसावित्र्यावेदमाताहमेवच ॥ कालेचकारतस्याश्वसपुत्रायाअदर्शनं ॥ २ ॥ बभूवदर्पोगंगायाअहंनिर्वाणदेतिच ॥ ज
न्हुद्वाराचतद्दर्पंजहारजगतांपतिः ॥ ३ ॥ जहारमनसादर्पंदुर्गाद्वारापुरामुने ॥ विरजोपगतंकृष्णंभर्त्सयामासकोपतः ॥ ४ ॥
प्रविशंतंरासगृहंगोपीभिर्विनिवारितं ॥ दौवारिकाभिर्वेत्रैश्वताडितंतंचदर्पतः ॥ ५ ॥ सुदाम्नानिजभक्तेनराधाशप्ताबभूवह ॥
देवेनरुहसाध्वस्तागोलोकादागताधरां ॥ ६ ॥ वृषभानुस्त्रियांजाताकलावत्यांचनारद ॥ कृष्णस्तदनुरोधेनकंसभीतिच्छले
नच ॥ ७ ॥ समागतोनंदगेहंतेनाहंनंदनंदनः ॥ सुदाम्नःशापविच्छेदपालनार्थंजगत्पतिः ॥ ८ ॥ पुनर्जगाममथुरामित्याह
कमलोद्भवः ॥ अस्याःपरमभिप्रायंकोवाजानातिनारद ॥ ९ ॥ कथंजातःसमायातोमथुरायाश्वगोकुलम् ॥ इत्येवंकथितंस

र्वमपरंश्रूयतामिति ॥ १० ॥ यथाजगाममथुरांनंदात्सनंदनंदनः ॥ शोकंनंदोयशोदाचयथासंप्रापदैवतः ॥ ११ ॥ यथागोपा
श्चगोप्यश्चगावोवृंदावनेवने ॥ वनेवनेवावन्यास्तेवन्याजानंतिकिंचन ॥ १२ ॥ वनंरम्यंवन्यपद्मापित्यक्त्वावनेवने ॥ श्म
शानेवाश्मशानेवाबभ्रामभामिनीमुने ॥१३॥ भामंत्यक्त्वाचबभ्रामचेतनाचेतनाक्षणम् ॥ क्षणेनवर्जितासाचप्रार्थयंतीप्र
तीक्षणं ॥ १४ ॥ क्षणंक्षणंसाश्वसंतीचिंतनंकुर्वतीक्षणं ॥ क्षणंविशंतीतल्पेचक्षणमुत्थायतिष्ठति ॥ १५ ॥ इतिश्रीब्र०म
हा०श्रीकृष्णज० अष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ श्रीनारायणउवाच ॥ ॥ इत्येवंकथितंसर्वंसर्वेषांदर्पभंजनं ॥
इंद्रस्यदर्पभंगंचविस्तारेणनिशामय ॥ १ ॥ इंद्रोदर्पात्सभायांचरत्नसिंहासनाद्वरात् ॥ नोत्तस्थौस्वगुरुंदृष्ट्वाब्रह्मिष्ठं
चबृहस्पतिं ॥ २ ॥ गुरुर्जगामातिरुष्टःस्वापमानेसमत्सरः ॥ तथापिकृपयाधर्मीस्नेहाच्चनशशापतं ॥ ३ ॥ विनाशापेनतद्द
र्पश्चूर्णीभूतोबभूवह ॥ अन्यश्चेन्नशपेद्धर्मात्प्रेम्णावाचातिकिल्बिषं ॥ ४ ॥ तथापितंचफलतिधर्मस्तंहंतिनारद ॥ योयंहिंस्रं
सापराधंशपेत्कोपेनधार्मिकः ॥ ५ ॥ विनाशःसापराधस्यधर्मोनष्टश्चधार्मिणः ॥ तेनाधर्मेणशक्रस्यब्रह्महत्याबभूवह ॥६॥
भीतस्त्यक्त्वास्वराज्यंचप्रययौससरोवरं ॥ सरसःपद्मसूत्रेचनिवासंचचकारसः ॥७॥ गंतुंनशक्ताहत्याचपुण्यंविष्णुसरो
वरं ॥ श्रेष्ठंभरतवर्षेचतपस्थानंतपास्विनां ॥ ८ ॥ तदेवपुष्करंतीर्थंप्रवदंतिपुराविदः ॥राज्यभ्रष्टंहरिंदृष्ट्वाहरिभक्तोनराधि
पः ॥ ९ ॥ बलाज्जहारतद्राज्यंनहुषोनामधार्मिकः ॥ दृष्ट्वाशचींवरारोहामनपत्यांचसुंदरीम् ॥ १० ॥ स्वर्गगंगांचगच्छंतीं
त्दयेनविद्रूयता ॥ नवयौवनसंपन्नांरत्नालंकारभूषितां ॥ ११ ॥ सुकोमलांतांसुदतींवदंतींचमहासतीं ॥ मूर्छांसंप्रापराजेंद्रः
कामेनयौवनेनच ॥ १२ ॥ उवाचतत्पुरःस्थित्वासुविनीतश्चदासवत् ॥ ॥ नहुषउ० ॥ ॥ धातुर्गतिर्विचित्राहोनबोध्या

चसतामपि ॥ १३ ॥ ईदृशीस्त्रीभगागस्यलुब्धस्यपरयोषिति ॥ ईदृशीसुंदरीयस्यपरभार्यासुतन्मनः ॥ १४ ॥ अस्याअग्रे
चकारंभाकोर्वशीकातिलोत्तमा ॥ कावामेनाघृताचीवारत्नमालाकलावती ॥ १५ ॥ कालिकासुंदरीभद्रावतीचंपावतीत
था ॥ एताश्चाप्सरसश्चान्याकलांनार्हंतिषोडशीं ॥ १६ ॥ इमांविहायमूढोन्यांकथंगच्छतिमंदधीः ॥ अस्माकंयेषितोया
श्चचेटीतुल्याश्चनिश्चितं ॥ १७ ॥ मांभजस्ववरारोहेसुप्रीताभवकिंकरं ॥ यथाराधाचगोलोकेकृष्णवक्षसिराजते ॥ १८ ॥ वै
कुंठेरासिवैकुंठेयथालक्ष्मीःसरस्वती ॥ ब्रह्मलोकेचब्रह्माणीयथैवब्रह्मवक्षसि ॥ १९ ॥ यथामूर्तिर्महासाध्वीधर्मवक्षःस्थल
स्थिता ॥ पातालतललक्ष्मीर्वायथैवानंतवक्षसि ॥२०॥ यथापुष्टिर्गणेशेचदेवसेनाचकार्तिके ॥ वरुणेवरुणानीचयथास्वा
हाहुताशने ॥ २१ ॥ यथारतिःकामदेवेयथासंज्ञादिनेश्वरे ॥ वायोःपत्नीयथावायौयथाचंद्रेचरोहिणी ॥ २२ ॥ यथादिति
र्देवमातातवश्वश्रूश्चकश्यपे ॥ यथाहिमालयेमेनापितृकन्याचमानसी ॥ २३ ॥ लोपामुद्रायथागस्त्येयथाताराबृहस्पतौ॥
कर्दमेदेवहूतीचवसिष्ठेरुंधतीयथा ॥ २४ ॥ मनौचशतरूपेवदमयंतीनलेयथा ॥ तथाभवत्वंसौभाग्यामम वक्षसिसुंदरि॥२५॥
लीलयाचसहस्रेंद्रान्छेत्तुंशक्तोहमीश्वरः ॥ नारीवांछतिजारंचस्वामिनोबलवत्तरं ॥ २६ ॥ सुमेरुगिरिकूटेचदुर्गमेतिरह
स्थले ॥ अथवामलयेरम्येरम्येचंदनवायुना ॥ २७ ॥ विश्वंभकेसुरसनेकिंवानंदनकानने ॥ निकटेशतशृंगस्यपुष्पभद्रा
नदीतटे ॥ २८ ॥ गोदावरीतीरनीरेसमीपेशीतवायुना ॥ चंपावतीनदीतीरेरम्येचंपककानने ॥२९॥ श्मशानेतिश्मशानेचर
म्येतिनिर्जनेवने ॥ शैलेशैलेतिरहसिकंदरेकंदरेवने॥३०॥ द्वीपेद्वीपेदुर्गदुर्गेनद्यांनद्यांनदेनदे ॥ समुद्रपुलिनेरम्येसर्वज
तुविवर्जिते ॥ ३१ ॥ विदग्धायाविदग्धेनसंगमोनिर्जनेसुखः ॥ पुष्पचंदनशय्यायांपुष्पचंदनचर्चिते ॥ ३२ ॥ मांगृही

त्वांकुरुरतिंपुष्पचंदनचर्चितं ॥ ब्रह्मणश्चवरैर्देवीजरामृत्युविवर्जितं ॥ ३३ ॥ मांकुरुष्वपतिंभद्रेनित्यंसुस्थिरयौवनं ॥ सुवेषंसुंदरंधीरंकामशास्त्रविशारदं ॥ ३४ ॥ शरत्पार्वणचंद्रास्यंचंद्रवंशसमुद्भवं ॥ आगतामुर्वशींमित्यांत्यक्तवंतंचयाचतीं ॥ ॥ ३५ ॥ नमेस्पृहापरस्त्रीषुत्वांदृष्ट्वालोलुपंमनः ॥ त्यक्तामयास्वभार्याश्चरत्नभूषणभूषिताः ॥ ३६ ॥ अथवावक्षताःसर्वा दासीःकृत्वावरानने ॥ रत्नेंद्रसारांमालांतेदास्यामिवरुणस्यच ॥३७॥ निर्जित्यवरुणंयुद्धेब्रह्मास्त्रेणातितेजसा ॥ वन्हिशुद्धं वस्त्रयुगंजित्वावन्हिंसुदुर्बलं ॥ ३८ ॥ दास्याम्यद्यैवतेदेविवियोज्यंमांनियोजय ॥ मणींद्रसारनिर्माणमकराकारकुंडले ३९ ॥ दास्यामिदेवान्निर्जित्यदेवमातुश्चसुंदरि ॥ करभूषणयुग्मंचात्यमूल्यरत्ननिर्मितं ॥४०॥ दास्याम्यद्यैवरोहिण्याश्चंद्रंजित्वा तिदुर्लभं ॥ यक्ष्मग्रस्तमतिकृशंममैवपूर्वपूरुषं ॥ ४१ ॥ विनायुद्धेनभीतोमांकृपयावाप्रदास्यति ॥ अल्परत्नविनिर्माणंक णन्मंजीरयुग्मकं ॥ ४२ ॥ दास्याम्यद्यैवपार्वत्याभिक्षांकृत्वामहेश्वरं ॥ आशुतोषंस्तुतिवशंभक्तेशंचकृपामयं ॥ ४३ ॥ स प्राणनांचदातारंपरंकल्पतरुंशुभे ॥ अमूल्यरत्ननिर्माणकेयुरयुगुलंप्रिये ॥४४॥ दास्यामितेद्यगंगायायुद्धंकृत्वासुदुर्लभं ॥ बहुलीयुगलंचारुसूर्यपत्न्यामनोहरं ॥४५॥ सद्रत्नसारनिर्माणंदास्याम्यद्यसुशोभने ॥ अमूल्यरत्ननिर्माणंदर्पणंचातिनि र्मलं ॥ ४६॥ दास्यामितेकामपत्न्याःकामंजित्वाचलीलया ॥ क्रीडाकमलमम्लानंकमलायाश्चसुंदरि ॥४७॥ भिक्षांकृत्वा चदास्यामिस्तुत्वाचकमलापतिं ॥ अंगुलीयकरत्नानिविश्वेषुदुर्लभानिच ॥ ४८ ॥ सावित्र्याश्चप्रदास्यामिकृत्वाचब्रह्मण स्तथा ॥ स्वयंगीतंप्रगायंतींमूर्छानाश्रुतिसंयुतां ॥४९ ॥ वाणीवीणांप्रदास्यामिकृत्वानारायणव्रतं ॥ रत्नपाशकसंघंच विश्वकर्मविनिर्मितं ॥ ५०॥ कुबेरपत्न्याद्दास्यामिपादांगुलिविभूषणं ॥ इत्येवमुक्त्वानहुषःपपाततत्पदांबुजे ॥५१॥ उवा

चतंशचीत्रस्ताराजमार्गगतंनृप ॥ उत्थाप्यतंकरेधृत्वाशुष्ककंठोष्ठतालुका ॥ ५२ ॥ स्मारंस्मारंपदांभोजंमहासाध्वीहरे
र्गुरोः ॥ शच्युवाच ॥ शृणुवत्समहाराजहेतातभयभंजन ॥५३॥ भयत्राताचराजाचसर्वेषांपालकःपिता ॥ भ्रष्टश्रीश्चमहेंद्रो
घस्त्वंचस्वर्गेनृपोधुना ॥ ५४ ॥ योराजासपितापाताप्रजानामेवनिश्चितं ॥ गुरुपत्नीराजपत्नीदेवपत्नीतथावधूः ॥५५॥
पित्रोःस्वसाशिष्यपत्नीभृत्यपत्नीचमातुली ॥ पितृपत्नीभ्रातृपत्नीश्वश्रूश्चभगिनीसुता ॥ ५६ ॥ गर्भधात्रीष्टदेवीचपुंसः
षोडशमातरः ॥ त्वंनरोदेवभार्याहंमातातेदेवसंमता ॥ ५७ ॥ गच्छवत्सादितिंरंतुंयदिचेच्छसिमातरं ॥ सर्वेषांनिष्कृतिश्चा
स्तिनवत्समातृगामिनां ॥ ५८ ॥ कुंभीपाकेतेपचंतियावद्वैब्रह्मणोवयः ॥ ततोभवंतिकृमयःकल्पासप्तभवंतिते ॥ ५९ ॥ त
तश्चकुष्ठिनोम्लेंछाभवंतिसप्तजन्मसु ॥ नास्त्येवनिष्कृतिस्तेषामित्याहकमलोद्भवः ॥ ६० ॥ एवंविट्क्षत्रशूद्राणांब्राह्म
णीगमनेनृप ॥ वेदेषुनिष्कृतिर्नास्तिचेत्यांगिरसभाषितं ॥ ६१ ॥ स्वर्गसंपत्तिभोगश्चसुखंसंसारिणांध्रुवं ॥ मुमुक्षूणां
चमोक्षश्चतपश्चैवतपस्विनां ॥ ६२ ॥ ब्राह्मणानांचब्रह्मण्यंमुनीनांमौनमेवच ॥ वेदाभ्यासोवैदिकानांकवीनांकाव्यवर्ण
नं ॥ ६३ ॥ विष्णुदास्यंवैष्णवानांविष्णुभक्तिरसंपरं ॥ विष्णुभक्तिंविनानैवमुक्तिंवांछंतिवैष्णवाः ॥६४॥ मलाढ्येषुचकु
देषुदुर्गंधिनिलयेषुच ॥ साधूनांकिंसुखंसाधोस्त्रीणांयोनिषुमांवद ॥ ६५ ॥ कुलप्रदीपेराजेंद्रराज्ञांमंडलवर्त्तिनां ॥ लब्धंच
भारतेजन्मपुण्येनबहुजन्मनां ॥ ६६ ॥ पद्मानांचंद्रवंश्यानांनृपाणांदीप्तिहेतवे ॥ त्वमाविरासीस्तेजस्वीग्रीष्ममध्यान्हभा
स्करः ॥ ६७ ॥ सर्वेषामाश्रमाणांचस्वधर्मश्चयशःपरम् ॥ स्वधर्महीनानरकेपतंतिमूढचेतसः ॥ ६८ ॥ ब्राह्मणस्यस्वधर्म
श्चत्रिसंध्यमर्चनंहरेः ॥ तत्पादोदकनैवेद्यभक्षणंचसुधाधिकं ॥ ६९ ॥ अन्नंविष्ठाजलंमूत्रमनिवेद्यंहरेर्नृप ॥ भवंतिसूक

राःसर्वैर्ब्राह्मणायदिभुंजते ॥ ७० ॥ आजीवंभुंजतेविप्राएकादश्यांनभुंजते ॥ कृष्णजन्मदिनेचैवशिवरात्रौसुनिश्चितं ॥ ॥ ७१ ॥ तथारामनवम्यांचयत्नतःपुण्यवासरे ॥ ब्राह्मणानांस्वधर्मश्चकथितोब्रह्मणानृप ॥ ७२ ॥ व्रतंपतिव्रतानांचपतिसेवापरंतपः ॥ यथापुत्रःपरपतिरेषधर्मश्चयोषितां ॥ ७३ ॥ पालयंतियथाभूपाःप्रजाःपुत्रानिवौरसान् ॥ प्रजाःस्त्रियंचपश्यंतिराजानोमातरंयथा ॥ ७४ ॥ यज्ञंकुर्वंतिविष्णोश्चसेवनंदेवविप्रयोः ॥ निवारणंवदुष्टानांशिष्टानांप्रतिपालनं ॥७५॥ इतिधर्मःक्षत्रियाणांकथितोब्रह्मणापुरा ॥ वाणिज्यंचैववैश्यानांस्वधर्मोधर्मसंचयः ॥ ७६ ॥ शूद्राणांविप्रसेवाचपरोधर्मोविधीयते ॥ सर्वन्यासोहरौभूपधर्मःसंन्यासिनांध्रुवं ॥ ७७ ॥ रक्तैकवासादंडीचबिभर्तिमृत्कमंडलुं ॥ सर्वत्रसमदर्शीचस्मरेन्नारायणंसदा ॥ ७८ ॥ करोतिभ्रमणंनित्यंगेहेगेहेनतिष्ठति ॥ विद्यामंत्रंचकस्मैचिन्नददातिचलोभतः ॥ ७९ ॥ करोतिनाश्रमंभिक्षुःकरोतिनान्यवासनां ॥ करोतिनान्यसंगंचनिर्मोहःसंगवर्जितः ॥ ८० ॥ नस्वादुभुंक्तेलोभाच्चस्त्रीमुखंनाहिपश्यति ॥ नवांछितंभक्ष्यवस्तुयाचतेगृहिणंव्रती ॥८१॥ इतिसन्यासिनांधर्ममित्याहकमलोद्भवः ॥ इतितेकथितंपुत्रगच्छवत्सयथासुखं ॥ ८२ ॥ इत्युक्त्वाचमहेंद्राणीविररामचवर्तमाने ॥ उवाचनहुषोराजाशचींवक्रप्रकंधरः ॥ ८३ ॥ ॥ नहुषउ० ॥ त्वयायत्कथितंदेविसर्वंतत्तुविपर्ययं ॥ यथार्थधर्मंवेदोक्तंनिबोधकथयामिते ॥ ८४ ॥ कर्मणांफलभोगश्चसर्वेषांसुरसुंदरि ॥ नैवस्वर्गेनपातालेनान्यद्वीपेश्रुतौश्रुतं ॥८५॥ कृत्वाशुभाशुभंकर्मपुण्यक्षेत्रेचभारते ॥ अन्यत्रतत्फलंभुंक्तेकर्मीकर्मानिबंधनात् ॥८६॥ हिमालयादासमुद्रंपुण्यक्षेत्रंचभारतं ॥ श्रेष्ठंसर्वस्थलानांचमुनीनांचतपस्थलं ॥८७॥ तत्रलब्ध्वाजन्मजीवीवंचितोविष्णुमायया ॥ शश्वत्करोतिविषयंविहायसेवनंहरेः ॥८८॥ कृत्वातत्रमहत्पुण्यंस्वर्गंगच्छतिपुण्यवान् ॥ गृहीत्वा

सर्वकन्याश्चचिरंस्वर्गेप्रमोदते ॥ ८९ ॥ स्वर्गमागच्छतिनरोविहायमानवींतनुम् ॥ स्वशरीरेणागतोऽहंमत्पुण्यंपश्यसुंदरि
॥ ९० ॥ अनेकजन्मपुण्येनचागतोस्वर्गमीप्सितं ॥ ततःकिंकेनपुण्येनदर्शनंमत्वयासह ॥ ९१ ॥ नहिकर्मस्थलमिदंस्वर्गभो
गस्थमेवच ॥ भोगस्थलेभोगवस्तुनहित्यक्तुंप्रशस्यते ॥ ९२ ॥ भावानुरक्तारसिकाभोग्यात्वंभोगिनामिह ॥ द्रव्यमस्वामि
कंभोग्यंसुखंत्यजतिमंदधीः ॥ ९३ ॥ आविरोधसुखत्यागीपशुरेवनसंशयः ॥ गच्छकांतेगृहंगत्वाकुरुतल्पंमनोहरं ॥ ९४ ॥
रमणीयंचरहसिवरंरतिकरंपरं ॥ त्यजद्वैधंचमनसोनिश्चितंवरवर्णिनि ॥ ९५ ॥ वराननेमयासार्द्धंमोदस्ववरमंदिरे ॥ अमूल्य
रत्नमालांचमणिराजविराजितां ॥ ९६ ॥ भिक्षांकृत्वाचदास्यामिलक्ष्मीवक्षसिशोभितां ॥ मणिंचानंताशिरसःसर्वेषामतिदु
र्लभं ॥ ९७ ॥ दुष्प्राप्यंत्रिषुलोकेषुतुभ्यंदास्यामिसुंदरि ॥ मणिरत्नंकौस्तुभंचयन्नारायणवक्षसि ॥ ९८ ॥ भिक्षांकृत्वातुदा
स्यामिकृत्वानारायणव्रतं ॥ चंद्रशेखरमौलेश्चयदर्द्धंचंद्रभूषणं ॥ ९९ ॥ जरामृत्युव्याधिहरंशक्रंक्रीडाकरंवरं ॥ अतीवविश्व
दुष्प्राप्यंविश्ववंद्यंचसुंदरं ॥ १०० ॥ विश्वनाथव्रतंकृत्वातुभ्यंदास्यामिनिश्चितं ॥ दास्यामितेश्रीसूर्यस्यमणिश्रेष्ठंस्यमंतकं
॥ १ ॥ भक्त्यासूर्यव्रतंकृत्वात्रिषुलोकेषुदुर्लभं ॥ अष्टौभारान्सुवर्णंचयश्चनित्यंप्रसूयते ॥ २ ॥ जरामृत्युहरंचैवपरंक्रीडाकरंप्रिये
॥ अमूल्यरत्ननिर्माणंपात्ररत्नंमनोरमं ॥ ३ ॥ संततंमधुपूर्णंचदास्यामिमदनस्यच ॥ अमूल्यरत्ननिर्माणंसूर्यतुल्यंचतेजसा
४ नानाचित्रविचित्राढ्यंनिर्माणमीश्वरेच्छया ॥ निर्मलंमंडलाकारंमणिराजविराजितं ५ हस्तलक्षपरिमितंचतुरस्रंचसुंद
रि ॥ पद्मापद्मासनंश्रेष्ठंप्रेष्ठंतस्याःसुदुर्लभं ॥ ६ ॥ ध्रुवंतुभ्यंप्रदास्यामिकृत्वापद्मालयाव्रतं ॥ इत्येवमुक्त्वानहुषःकृत्वावर्त्म
निरोधनं ॥ ७ ॥ पुनःपपातचरणेमहेंद्राण्यामुहुर्मुहुः ॥ नृपस्यवचनंश्रुत्वाशुष्ककंठोष्ठतालुका ॥ ८ ॥ तमुवाचमहेंद्राणीस्मेर

रंस्मारंगुरुंहरिं ॥ ॥ शच्युवाच ॥ ॥ अचेतनस्यमूढस्यकार्याकार्यमजानतः ॥ ९ ॥ श्रोष्याम्यद्यकतिविधांकथां
कामातुरस्यच ॥ मधुमत्तःसुरामत्तःकाममत्तोविचेतनः ॥ १० ॥ मृत्युंनगणयेत्कामीकामेनत्हृतमानसः ॥ त्यजमामद्यहे
मत्तमातृतुल्यांरजस्वलां ॥ ११ ॥ ऋतोःप्रथमोदिवसोत्यद्यहेनृपमेध्रुवं ॥ प्रथमेदिवसेस्त्रीचचांडालीसारजस्वला ॥ १२ ॥
द्वितीयेदिवसेम्लेंछातृतीयेरजकीतथा ॥ शुद्धाभर्तुश्चतुर्थेन्हिनशुद्धादैवपैत्र्ययोः ॥ १३ ॥ असत्शूद्रसमासाचताद्दिनेचपरंप्र
ति ॥ प्रथमेदिवसेकांतांयोहिगच्छेद्रजस्वलां ॥ १४ ॥ ब्रह्महत्याचतुर्थांशंलभतेनात्रसंशयः ॥ सपुमान्नहिकर्मार्होदैवेपि
त्र्येचकर्माणि ॥ १५ ॥ अधमःसचसर्वेषांनिंदितश्चायशस्करः ॥ द्वितीयेदिवसेनारींयोव्रजेच्चरजस्वलां ॥ १६ ॥ कामतः
परिपूर्णश्चगोहत्यांलभतेध्रुवं ॥ आजीवनंनाधिकारीपितृविप्रसुरार्चने ॥ १७ ॥ आमनुष्योयशस्यःस्यादित्यांगिरसभा
षितं ॥ तृतीयेदिवसेजायांयोहिगच्छेद्रजस्वलां ॥ १८ ॥ समूढोभ्रूणहत्यांचलभतेनात्रसंशयः ॥ पूर्ववत्पतितःसोपिनचा
र्हःसर्वकर्मसु ॥ १९ ॥ असत्शूद्राचतुर्थेन्हिनगच्छेत्तांविचक्षणः ॥ यदिमांमातरंमूढगृहिष्यसिबलेनच ॥ २० ॥ ऋतावतीते
दिवसेगमनंचकरिष्यसि ॥ शच्याश्चवचनंश्रुत्वाप्रहस्यनहुषस्तथा ॥ २१ ॥ उवाचमधुरंशांतःशक्रकांतांचसुव्रतां ॥ देवपत्नी
सदाशुद्धातन्नूनंमानवंप्रति ॥ २२ ॥ शयनेभोजनेदेवीनाशुद्धामानवंप्रति ॥ रजस्वलायाःसंभोगेकर्मक्षेत्रेचभारते ॥ २३ ॥
त्वयोक्तंचभवेत्पापंनात्रदुर्गेचसुंदरि ॥ कर्मक्षेत्रेऽपितत्कर्मयद्देदोक्तंशुभाशुभे ॥ २४ ॥ नभवेद्वैष्णवानांचज्वलतांब्रह्मते
जसा ॥ यथाप्रदीप्तेवन्हौचशुष्काणिचतृणानिच ॥ २५ ॥ भवंतिभस्मीभूतानितथापापानिवैष्णवे ॥ वन्हिसूर्यब्राह्मणे
भ्यस्तेजोयान्वैष्णवःसदा ॥ २६ ॥ रक्षितोविष्णुचक्रेणस्वतंत्रोमत्तकुंजरः ॥ नविचारोनभोगश्चवैष्णवानांस्वकर्मणां ॥ २७

लिखितंसाम्निकौथुम्याकुरुप्रश्नबृहस्पात ॥ अस्मांश्चसर्वेजानंतिचंद्रवंश्यांश्चवैष्णवान् ॥ २८ ॥ देवमन्यंनसेवंतेचंद्रवं
श्याहरिंविना ॥ सद्वंशप्रभवोयोहिब्राह्मणःक्षत्रियोथवा ॥ २९ ॥ विष्णुमंत्रंनगृह्णातिवंचितोदेवमायया ॥ कोवामंत्रश्चके
देवानहिशास्तायमोमम ॥ १३० ॥ सर्वान्शास्तुंसमर्थोऽहंब्रह्मविष्णुशिवंविना ॥ शय्यांकुरुगृहंगत्वाशीघ्रंयास्याभिते
गृहं ॥ ३१ ॥ ऋतुपापंमयिभवेत्तवाकिंगच्छशोभने ॥ इत्युक्त्वानहुषोराजाप्रफुल्लवदनेक्षणः ॥ ३२ ॥ रत्नयानंसमारुह्यय
योनंदनकाननम् ॥ नययौसाशचीगेहंप्रजगामगुरोर्गृहं ॥ ३३ ॥ गत्वाकुशासनस्थंचददर्शचबृहस्पतिं ॥ तारासेवितपादा
ब्जंज्वलंतंब्रह्मतेजसा ॥ ३४ ॥ जपमालाकरंशश्वज्जपंतंकृष्णमीप्सितं ॥ परमंपरमानंदंपरमात्मानमीश्वरं ॥ ३५ ॥ निर्गु
णंचनिरीहंचस्वतंत्रंप्रकृतेःपरं ॥ स्वेच्छामयंपरंब्रह्मभक्तानुग्रहविग्रहं ॥ ३६ ॥ तमानंदाश्रुनेत्रंचननामशिरसाभुवि ॥ रुदं
तीसाश्रुनेत्रासामज्जंतीभक्तिसागरे ॥ ३७ ॥ शोकार्णवेनिमज्जंतीत्हृदयेनविदूयता ॥ तुष्टावभीतास्वगुरुंब्रह्मिष्ठंचकृपानिधिं
॥ ३८ ॥ ॥ शच्युवाच ॥ ॥ रक्षरक्षमहाभागमांभीतांशरणागतां ॥ त्वमीश्वरःस्वदासींचनिमग्नांशोकसागरे ॥ ३९ ॥
अनीश्वरश्चेश्वरोवाबलवान्वासुदुर्बलः ॥ स्वशिष्यभार्यापुत्रांश्चशासितुंचसदाक्षमः ॥ ४० ॥ दूरीभूतःसराज्याच्चस्वशिष्य
श्चकृतस्त्वया ॥ शस्तिर्बभूवदोषस्यचाधुनानिग्रहंकुरु ॥ ४१ ॥ सर्वेषांचगुरूणांचजन्मदातापरोगुरुः ॥ पितुःशतगुणामा
तापूज्यावंद्यागरीयसी ॥ ४२ ॥ विद्यादातामंत्रदाताज्ञानदोहरिभक्तिदः ॥ पूज्योवंद्यश्चसेव्यश्चमातुःशतगुणोगुरुः ॥ ४३ ॥
मंत्रमुद्गीरणेनैवगुरुरित्युच्यतेबुधैः ॥ अन्योवंद्योगुरुरयमन्यश्चारोपितोगुरुः ॥ ४४ ॥ अज्ञानतिमिरांधस्यज्ञानांजनशला
कया ॥ चक्षुरुन्मीलितंयेनतस्मैश्रीगुरवेनमः ॥ १४५ ॥ अदीक्षितस्यमूर्खस्यनिष्कृतिर्नास्तिनिश्चितं ॥ सर्वकर्मस्वनर्हस्य

नरकेतत्पशोस्थितिः ॥ ४६ ॥ जन्मदातान्नदाताचमातान्येगुरवस्तथा ॥ पारंकर्तुंनशक्तास्तेघोरसंसारसागरे ॥ ४७ ॥ वि-
द्यामंत्रज्ञानदातानिपुणःपारकर्मणि ॥ सशक्तःशिष्यमुद्धर्तुमीश्वरश्चेश्वरात्परः ॥ ४८ ॥ गुरुर्विष्णुर्गुरुर्ब्रह्मा गुरुर्देवोमहेश्व
रः ॥ गुरुर्धर्मोगुरुःशेषःसर्वात्मानिर्गुणोगुरुः ॥ ४९ ॥ सर्वतीर्थाश्रमश्चैवसर्वदेवाश्रयोगुरुः ॥ सर्वदेवस्वरूपश्चगुरुरूपीहरिः
स्वयं ॥ १५० ॥ अभीष्टदेवेरुष्टेचगुरुःशक्तोहिरक्षितुं ॥ गुरौरुष्टेभीष्टदेवोनहिशक्तश्चरक्षितुं ॥ ५१ ॥ सर्वेग्रहाश्चयंरुष्टारुष्टाश्च
देवब्राह्मणाः ॥ त्वमेवरुष्टोभवसिगुरुरेवहिदेवताः ॥ ५२ ॥ नगुरोश्चप्रियश्चात्मानगुरोश्चप्रियःसुतः ॥ धनंप्रियंचनगुरोर्न
चभार्याप्रियातथा ॥ ५३ ॥ नगुरोश्चप्रियोधर्मोनगुरोश्चप्रियंतपः ॥ नगुरोश्चप्रियंसत्यंनपुण्यचगुरोःपरं ॥ ५४ ॥ गुरोःपरो
नशास्ताचनहिबंधुर्गुरोःपरः ॥ देवोराजाचशास्ताचशिष्याणांचसदागुरुः ॥ ५५ ॥ यावान्शक्तोदातुमन्नंतावत्शास्तात
मन्नदः ॥ गुरुःशास्ताचशिष्याणांप्रतिजन्मनिजन्मनि ॥ ५६ ॥ मंत्रोविद्यागुरुर्देवःपूर्वलब्धोयथापतिः ॥ प्रतिजन्मनि
बंधेनसर्वेषामुपरिस्थितं ॥ ५७ ॥ पितागुरुश्चवंद्यश्चयत्रजन्मनिजन्मदः ॥ गुरवोन्येतथामात्रागुरुश्चप्रतिजन्मनि ॥ ५८
विप्राणांत्वंवरिष्ठश्चगरिष्ठश्चतपस्विनां ॥ ब्रह्मिष्ठोब्रह्मविद्वन्धर्मिष्ठःसर्वधर्मिणां ॥ ५९ ॥ तुष्टोभवमुनिश्रेष्ठमांचशक्रंचसां
प्रतं ॥ त्वयितुष्टेसदातुष्टाभवंतिग्रहदेवताः ॥ ६० ॥ इत्युक्त्वासाशचीब्रह्मन्पुनरुच्चैरुरोदह ॥ दृष्ट्वातद्रोदनंतारारुरोदोच्चैर्मुहु
र्मुहुः ॥ ६१ ॥ पपातचरणेतारारुरोदचपुनःपुनः ॥ अपराधंक्षमेत्युक्त्वागुरुस्तुष्टोप्युवाचतां ॥ ६२ ॥ ॥ गुरुरुवाच ॥
उत्तिष्ठतारेशच्याश्चसर्वंभद्रंभविष्यति ॥ सद्यःप्राप्स्यतिभर्त्तारंमहेंद्रंचमदाशिषा ॥ ६३ ॥ इत्युक्त्वासगुरुस्तत्रविररामच
नारद ॥ पपातंचरणेतारापुनरेवरुरोदच ॥ ६४ ॥ गृहीत्वाचशचींतारांसंस्थाप्यचस्ववक्षसि ॥ बोधयामासविविधमध्यात्म

कमनुत्तमं ॥६५॥ शचीकृतगुरुस्तोत्र पूजाकालेचयःपठेत् ॥ गुरुश्चाभीष्टदेवश्चसंतुष्टःप्रतिजन्मनि ॥६६॥ ग्रहदेवद्विजा
स्तंचपरितुष्टाश्चसंततं ॥ राजानोबांधवाश्चैवसंतुष्टाःसर्वतःसदा ॥ ६७॥ गुरुभक्तिंविष्णुभक्तिंवांछितंलभतेध्रुवं ॥सदाहर्षो
भवेत्तस्यनचशोकःकदाचन ॥ ६८ ॥ पुत्रार्थीलभतेपुत्रंभार्यार्थीलभतेप्रियां ॥ सुस्वरूपांगुणवतींसतींपुत्रवतींध्रुवं॥६९
रोगार्तोमुच्यतेरोगाद्बद्धोमुच्येतबंधनात् ॥ अस्पष्टकीर्तिःसुयशामूर्खोभवतिपंडितः ॥ ७० ॥ कदाचिद्बंधुविच्छेदोनभवेत्त
स्यनिश्चितं ॥ नित्यंतद्वर्द्धतेधर्मोविपुलंनिर्मलंयशः ॥ ७१ ॥ लभतेपरमैश्वर्यंपुत्रपौत्रधनान्वितं॥ इहसर्वसुखंभुक्त्वाप्रा
प्यतेश्रीहरेःपदं ॥७२॥ नभवेत्तत्पुनर्जन्महरिदास्यंलभेत्ध्रुवं ॥ विष्णुभक्तिरसाब्धौचनिमग्नश्चभवेत्ध्रुवं॥ ७३॥ शश्वत्पि
बतिशांतश्चविष्णुभक्तिरसामृतं ॥ जन्ममृत्युजराव्याधिशोकसंतापनाशनं ॥ ७४॥ इतिश्रीब्रह्मवैवर्तेम०श्रीकृष्णजन्म०
महेंद्रदर्पभंगप्रकरणेशचीशोकापनोदनेशचीकृतगुरुस्तोत्रकथनंनामऊनषष्टितमोऽध्यायः॥ ५९ ॥ ॥श्रीनारायण
उवाच ॥ ॥शचीस्तोत्रंसमाकर्ण्यपरितुष्टोबृहस्पतिः॥उवाचमधुरंशांतःकांतामिंद्रस्यनारद॥ १ ॥ बृहस्पतिरुवा० त्यजव
त्सेभयंसर्वंभयंकिंतेमयिस्थिते ॥ यथाकचस्यपत्नीमेतथात्वमपिशोभने॥ २ ॥ यथापुत्रस्तथाशिष्योनभेदःपुत्रशिष्य
योः॥ तर्पणेपिंडदानेचपालनेपरितोषणे॥ ३ ॥ यथाग्निदातापुत्रश्चतथाशिष्यश्चनिश्चितं ॥ इतीदंकण्वशाखायामुवाच
कमलोद्भवः ॥ ४ ॥ पितामातागुरुर्भार्याशिशुश्चानाथबांधवाः ॥ एतेपुंसांनित्यपोष्याइत्याहकमलोद्भवः ॥ ५ ॥ यश्चैतांश्चन
पुष्णातिभस्मांतंतस्यसूतकं॥ दैवेपित्र्येनकर्मार्हःसोपीत्याहमहेश्वरः ॥ ६॥ कुरुतेनरबुद्धिंचमातरंपितरंगुरुं ॥ अयशस्त
स्यसर्वत्रविघ्नएवपदेपदे ॥ ७ ॥ संपन्मत्तोयःकरोतिस्वगुरोश्चपराभवं ॥ अचिरात्सर्वनाशश्चभवेत्तस्यसुनिश्चितं ॥ ८ ॥मां

चदृष्ट्वासभामध्येनोत्तस्थौपाकशासनः॥ तत्फलंभुज्यतेसाक्षात्सद्यःपश्यचसांप्रतं ॥ ९ ॥ अहंकरोमिमोक्षंचतवरक्षांसु
निश्चितं॥ शासितुंरक्षितुंशक्तःसएवगुरुरुच्यते॥ १० ॥नपश्यतिसतीत्वंचत्वच्छुद्धायाश्चयोषितः॥ यन्मानसेविकल्पश्चत
स्यधर्मश्चनश्यति ॥ ११ ॥ भविष्यतिप्रभावस्तेदुर्गायाश्चसमःसति॥ लक्ष्मीसमाप्रतिष्ठाचयशस्तद्यशसासमं ॥ १२ ॥सौ
भाग्यंराधिकातुल्यंतत्समंप्रेमभर्त्तरि॥ तत्तुल्यंगौरवंमान्यंप्रीतिप्राधान्यमीश्वरे ॥ १३ ॥ रोहिण्याश्चसमापेक्षापूज्याश्चभा
रतीसमा ॥ शुद्धानिरुपमाशश्वत्सावित्रीसदृशीसदा ॥१४॥ एतस्मिन्नंतरेतत्रआगतोनहुषाच्चरः॥ उवाचवचनंभीतोवाक्प
तेर्गोचरेततः॥१५॥दूतउवाच॥उत्तिष्ठदेविशीघ्रंत्वंगच्छस्वनहुषंप्रति॥क्रीडांकर्त्तुंचरहसिरम्येनंदनकानने १६॥दूतस्यवचनंश्रु
त्वातमुवाचबृहस्पतिः॥कंपितावयवःकोपात्रक्तपंकजलोचनः १७॥गुरुरुवाच॥नहुषंवदगत्वात्वंशचींचेद्भोक्तुमिच्छसि
अपूर्वंयानमारुह्यनिशायामागमिष्यसि ॥१८ ॥सप्तर्षीणांचस्कंधेचदत्वास्वशिबिकांशुभां॥तामारुह्यसुवेषश्चगमनंकर्तुम
र्हसि॥१९॥ वाक्पतेर्वचनंश्रुत्वागत्वोवाचनृपंतदा ॥ दूतस्यवचनंश्रुत्वाप्रहस्योवाचकिंकरम्॥२०॥गच्छगच्छत्वरन्गच्छ
सप्तर्षीन्शीघ्रमानय ॥उपायंचकरिष्यामितैःसार्द्धंसांप्रतंचर ॥२१॥ नृपस्यवचनंश्रुत्वागत्वादूतस्तदंतिकं॥ उवाचसर्वांस्त
त्रैवयथोक्तंनहुषेणच॥२२॥ दूतस्यवचनंश्रुत्वाययुःसप्तर्षयोमुदा॥राजादृष्ट्वाचतान्सर्वान्ननामोवाचसादरं॥२३॥नहुषउ॰
यूयंचब्रह्मणःपुत्राज्वलंतोब्रह्मतेजसा॥ ब्रह्मणःसदृशाःसर्वेसततंभक्तवत्सलाः॥ २४॥ नारायणपराःशश्वच्छुद्धसत्वस्व
रूपिणः॥ मोहमात्सर्यहीनाश्चदर्पाहंकारवर्जिताः॥ २५॥ नारायणसमाःसर्वेतेजसायशसासदा ॥ गुणेनकृपयाप्रेम्णावर
दानेननिश्चितं ॥ २६ ॥ इत्युक्त्वाप्रणनोराजातुष्टावचरुरोदच॥ दृष्ट्वातेकातरंभूपमूचुःपरहितैषिणः॥ २७ ॥ ऋषयऊचुः॥

वरंवृणीष्वहेवत्सयत्तेमनसिवांछितं ॥ सर्वदातुंवयंशक्तानासाध्यंनश्चकिंचन ॥ २८॥ इंद्रत्वंवामनुत्वंवाचिरायुर्वाततःपरं ॥
सप्तद्वीपेश्वरत्वंचाप्यतीवसुचिरंसुखं ॥ २९ ॥ अथापिसर्वसिद्धित्वंसर्वैश्वर्यंसुदुर्लभं ॥ मुक्तिंवाहरिभक्तिंवातपसायासुदु
र्लभा ॥ ३० ॥ किमीप्सितंतेहेवत्सब्रूहिनःसांप्रतंमुदा ॥ सर्वंतुभ्यंप्रदास्यामस्तपसेमुदा ॥ ३१ ॥ युगलक्षसमंयच्चक्ष
णंकृष्णार्चनंविना ॥ तद्दिनंदुर्दिनंयत्तत्ध्यानसेवनवर्जितं ॥ ३२ ॥ विनातत्सेवनंयोहिविषयान्यंचवांछति ॥ विषमत्तिप्र
णाशायविहायामृतमीप्सितं ॥ ३३ ॥ ब्रह्माशिवश्चधर्मश्चविष्णुश्चापिमहान्विराट् ॥ गणेशश्चदिनेशश्चशेषश्चसनकादयः
॥ ३४ ॥ एतेयच्चरणांभोजंध्यायंतोहर्निशंमुदा ॥ जन्ममृत्युजराव्याधिहरंतन्निरतावयं ॥ ३५ ॥ तेषांचवचनंश्रुत्वातानुवा
चनृपेश्वरः ॥ सलज्जितोनम्रवक्त्रोमायामोहितमानसः ॥ ३६ ॥ ॥ नहुषउवाच ॥ ॥ सर्वदातुंमसर्थाश्चयूयंचभक्तवत्सलाः ॥
अधुनादेहिमेतूर्णंशचीदानमभीप्सितं ३७ सप्तर्षिवाहनंकांतंशचीच्छतिमहासती ॥ एतदेवममवरंनिष्पन्नंकुरताचिरं ॥ ३८ ॥
नहुषस्यवचःश्रुत्वामुनयश्चपरस्परं ॥ अत्युच्चैर्जहसुःसर्वेकौतुकेनचनारद ॥ ३९ ॥ राजानंमोहितंमत्वावेष्टितंविष्णुमायया ॥
चक्रुःप्रतिज्ञांवोढुंचकृपयादीनवत्सलाः ॥ ४० ॥ चक्रुःस्कंधेतच्छिबिकांमुक्तामाणिक्यभूषिताम् ॥ राजाययौसुवेषश्चरत्न
भूषणभूषितः ॥ ४१ ॥ दृष्ट्वाचातिविलंबंचभर्त्सयामासतान्नृपः ॥ क्रुधाशशापदुर्वासाश्चाग्रगामीचवर्त्मनि ॥ ४२ ॥ महानजग
रोभूत्वापतवैमूढमानस ॥ दर्शनाद्धर्मपुत्रस्यतवमोक्षोभविष्यति ॥ ४३ ॥ रत्नयानेनवैकुंठंगत्वावैकुंठसेवनं ॥ करिष्यासिम
हाराजनकर्मनिष्फलंभवेत् ॥ ४४ ॥ इत्युक्त्वाप्रययुःसर्वेप्रहस्यमुनिसत्तमाः ॥ राजापपाततच्छापात्सर्पोभूत्वामहामुने
॥ ४५ ॥ शचीजगामतच्छ्रुत्वागुरुंनत्वामरावतीं ॥ ययौबृहस्पतिःशीघ्रंयत्रेंद्रःपद्मतंतुषु ॥ ४६ ॥ गत्वासरोवराभ्याशमाज

हावसुरेश्वरं ॥ अतिप्रसन्नवदनःकृपयाचकृपानिधिः ॥ ४७ ॥ ॥ बृहस्पतिरुवाच ॥ अयिवत्सत्वमागच्छभयंकिंतेम
यिस्थिते ॥ त्यजभीतिमिहागच्छगुरुस्तेहंबृहस्पतिः ॥ ४८ ॥ स्वगुरोश्चस्वरंश्रुत्वामहेंद्रोत्हृष्टमानसः ॥ रूपंविहायानूहंच
स्वरूपेणसमाययौ ॥ ४९ ॥ पपातदंडवन्मूर्ध्नाभक्त्याचरणयोर्गुरोः ॥ तंरुदंतंमहाभीतंमुदोरसिचकारसः ॥५०॥ कारयित्वा
सोमयागंप्रायश्चित्तार्थमेवच ॥ रत्नसिंहासनेरम्येवासयामासतंगुरुं ५१ प्रददौपरमैश्वर्यंपूर्वस्माच्चचतुर्गुणं ॥ आगत्यसर्व
देवाश्चचक्रुःसेवांमुदान्विताः ॥ ५२ ॥ शचीसंप्रापभर्तारंमहेंद्रंत्रिदशेश्वरं ॥ मंदिरेपुष्पतल्पेचमुमुदेसामुदान्विता ॥५३ ॥
इत्येवंकथितंवत्समहेंद्रदर्पभंजनं ॥ शचीसतीत्वरक्षाचाकिंभूयःश्रोतुमिच्छसि ॥ ५४ ॥ ॥ नारदउवाच ॥ ॥ सोमयाग
विधानंचब्रूहिमांमुनिसत्तम ॥ कथंतंकारयामासगुरुश्चकिंफलंपरम् ॥ ५५ ॥ ॥ नारायणउवाच ॥ ॥ ब्रह्महत्याप्रश
मनंसोमयागफलंमुने ॥ वर्षंसोमलतापानंयजमानःकरोतिच ॥ ५६ ॥ वर्षमेकंफलंभुंक्तेवर्षमेकंजलंमुदा ॥ त्रैवार्षिकंवर्ष
मिदंसर्वपापप्रणाशनं ॥ ५७ ॥ यत्रत्रैवार्षिकंधान्यंनिहितंभूतवृद्धये ॥ अधिकंवापिविद्येतससोमंपातुमर्हति ॥५८ ॥ महा
राजश्चदेवोवायागंकर्तुंफलंमुने ॥ नसर्वसाध्योयज्ञोयंबव्हन्नोबहुदक्षिणः ॥५९॥ इति० म० श्रीकृ० शक्रदर्पभंगप्रकरणेशक्र
मोक्षकथनंनामषष्टितमोऽध्यायः ॥६०॥ श्रीनारायणउवाच ॥ इतितेकथितंकिंचिदिंद्रस्यदर्पभंजनं॥ अपरंश्रूयतांब्रह्मन्सा
वधानांनिगूढकं॥१॥ समुद्रमथनंकृत्वापीत्वामृतरसंपुरा॥ निर्जित्यदैत्यसंघांश्चबहुदर्पोबभूवह ॥२ तदाकृष्णोबलिद्वाराशक्र
दर्पंबभंजह॥ भ्रष्टश्रियोबभूवुस्तेदेवाइंद्रपुरोगमाः॥ ३ ॥ तदाबृहस्पतेःस्तोत्रादादितेश्चव्रतेनते॥ जातश्चस्वांशकलयाप्यदि
त्यांवामनोविभुः ॥ ४ ॥ यदुच्चांकृत्वाबलिंराज्यंकृपयाचकृपानिधिः ॥ तस्मैददौमहेंद्रायदेवेभ्यश्चापिसंपदं ॥ ५ ॥ बभू

वशक्रदर्पश्च पुनःकल्पांतरे पुरा ॥ विभुर्दुर्वाससाद्वाराजहारताछ्रियंमुने ॥ पुनर्ददौचकृपयाकृपालुर्भक्तवत्सलः ॥ पुनःश्रीदुर्म
दःसोपिजहारगौतमप्रियाम् ॥ ७ ॥ तदागौतमशापेनभगांगश्चबभूवसः ॥ संप्रापयातनामिंद्रःस्वांगवेदनयापुरा ॥ ८ ॥ उ
च्चैस्तंजहसुर्दृष्ट्वाऋषयोमनवस्तथा ॥ देवाश्चलज्जिताःसर्वेमृततुल्योबृहस्पतिः ॥ ९ ॥ तदासहस्रवर्षंचतपस्तप्त्वारवेःपुरा
रवेर्वरेणशक्रःससहस्राक्षोबभूवह ॥ १० ॥ कलंकरूपमिंद्रस्यतच्चक्षुर्निकरंपरं ॥ यथाचंद्रेकलंकश्चतारकाहरणादभूत् ॥ ११ ॥
नारदउवाच ॥ ॥ ब्रह्मन्केनप्रकारेणजहारगौतमप्रियां ॥ महासतीमहल्यांचपूज्यांभुवनपावनीं ॥ १२ ॥ शुद्धाशयांम
हाभागांनिर्मलांकमलाकलां ॥ एतद्वेदितुमिच्छामिवदवेदविदांवर ॥ १३ ॥ ॥ श्रीनारायणउवाच ॥ ॥ पुष्करेतीर्थ
यात्रायांसूर्यपर्वणिनारद ॥ तत्रागतामहल्यांचददर्शपाकशासनः ॥ १४ ॥ सुस्मितांसुदतींशांतांपीनश्रोणिपयोधरां ॥ मू
र्छामवापचेंद्रश्चदृष्टिमात्रेणतत्क्षणात् ॥ १५ ॥ अथापरदिनेतांचदृष्ट्वामंदाकिनीतटे ॥ एकाकिनींसुस्मितांचस्नातांलग्नां
सलज्जितां ॥ १६ ॥ दृष्ट्वाश्रोणींस्तनयुगमतीवविपुलंहरिः ॥ मूर्छामवापकामार्तोजहारचेतनांपुनः ॥ १७ ॥ क्षणेनचेतनां
प्राप्यगत्वाकामीतदंतिकं ॥ उवाचश्लक्ष्णयावाचाविनयेनपतिव्रतां ॥ १८ ॥ ॥ महेंद्रउवाच ॥ ॥ अहोगुणमहोरू
पमहोकिंवानवंवयः ॥ अहोकिंवामुखश्रीस्तेशरच्चंद्रविनिंदिता ॥ १९ ॥ अहोकटाक्षंकुटिलंपुंसांचित्तविकर्षणं ॥ किमहो
लोचनंपद्मप्रभामोचनमीप्सितं ॥ २० ॥ गमनंरमणीयंचगजखंजनभंजनं ॥ अहोवाक्यंतुमधुरंपीयूषादपिदुर्लभं ॥ २१ ॥
किमहोविपुलश्रोणीकामाधारामनोहरा ॥ कामदाकामुकायैवमुनिमानसमोहिनी ॥ २२ ॥ अतीवकठिनापीनारंभास्तंभ
विडंबिता ॥ अहोनितंबयुगलंवर्तुलंचंद्रबिंबवत् ॥ २३ ॥ श्रीयुक्तंश्रीफलयुगतुल्यंतेस्तनयुग्मकं ॥ अत्युन्नतंसुकठिनंचैलो

कयचित्तमोहनं ॥ २४ ॥ अहोकिंवातपस्तेपेगौतमश्चतपोधनः॥ संप्रापयत्फलेनैवसुदतींसुंदरींवराम् ॥ २५ ॥ निषेव्यप्र
कृतिंदुर्गांविष्णुमायांसनातनीं ॥ लक्ष्मींचलक्ष्मीसदृशींतपसाप्राप्यपद्मिनीं ॥ २६ ॥ सुकोमलांसुवदनांललनांनलिना
ननां ॥ शुद्धांचसुदतींश्यामांन्यग्रोधदलमध्यमां ॥ २७ ॥त्वत्पालनंचजानामिकामशास्त्रविचक्षणः॥कामोवाकामुकश्चंद्रः
किंत्वांजानातिगौतमः ॥ २८ ॥ मांप्रशंसंतिनित्यंतेकामशास्त्रविचक्षणाः ॥ उर्वश्याद्याश्चाप्सरसोमांप्रशंसंतिसंततं ॥२९ ॥
दासींकृत्वाचदास्यामिशचींतुभ्यंवरानने ॥ त्रैलोक्यलक्ष्मींविपुलांगृहाणत्यजगौतमं ॥ ३० ॥ अनभिज्ञंकामशास्त्रेदुर्बलं
चतपस्विनं ॥ अव्यवहार्यंनिष्कामंनारायणपरायणम् ॥ ३१ ॥ अविदग्धोविधाताचयोजयामासयोक्षमं ॥ ईदृशींकामु
कींरम्यांददातिचतपस्विने ॥ ३२ ॥ इत्युक्त्वाकामुकःशक्रःपपातचरणेमुदा ॥ तमुवाचमहासाध्वीवेदोक्तंचयथोचितं ॥
॥ ३३ ॥ ॥ अहल्योवाच ॥ ॥ अभाग्याद्ब्राह्मणश्चापिमरीचेश्चतपस्विनः ॥ अभाग्यात्कश्यपस्यापित्वंपुत्रःपापमानसः
॥ ३४ ॥ किंतज्जपेनतपसामौनेनचव्रतेनच ॥ सुरार्चनेनतीर्थैनस्त्रीभिर्यस्यमनोहृतं ॥ ३५ ॥ स्त्रीरूपंनिर्मितंसृष्टौमोहाय
कामिनांमनः ॥ अन्यथानभवेत्सृष्टिःस्रष्टातेनपुराज्ञया ॥ ३६ ॥ सर्वमायाकरंडश्चधर्ममार्गार्गलंनृणां ॥ व्यवधानंचतप
सांदोषाणामाश्रमंपरं ॥ ३७ ॥ कर्मबंधनिबंधानांनिगडंकठिनंस्मृतं ॥ प्रदीपरूपंकीटानांमीनानांबडिशंयथा ॥ ३८ ॥ विष
कुंभंदुग्धमुखमारंभेमधुरोपमं ॥ परिणामेदुःखबीजंसोपानंनरकस्यच ॥ ३९ ॥ ऋषयःसनकाद्याश्चनोद्वाहंचक्रुरीप्सितं
परस्त्रीषुमनोयेषांतेषांसर्वंचानिष्फलं ॥ ४० ॥ परस्त्रीसेवनंशक्रइहैवात्ययशस्करं ॥ परत्रनरकंघोरंददातिकामुकायच ॥४१
इत्युक्त्वाचमहासाध्वीविहायतंचकामुकं ॥ प्रययौस्वगृहंगंतुंगृहिणीगौतमस्यच ॥ ४२ ॥ तत्सर्वंकथयामासगौतमायत

पस्विने ॥ तस्यौप्रहस्यंसमुनमहद्रचावानंघच ॥ ४३ ॥ एकदागौतमःशीघ्रंजगामशंकरालयं ॥शक्रोगौतमरूपेणतांसं
भोगंचकारसः॥४४॥ सर्वज्ञात्वाचसर्वज्ञोस्वयंमंदिरमाययौ ॥निर्गच्छंतंमहेंद्रंचददर्शमुनिपुंगवः॥४५॥नग्नामहल्यांरहसिपी
नश्रोणिपयोधरां॥मुनिःशशापशक्रंचभगांगश्चभवेतिच॥४६॥कोपाच्छशापपत्नींचरुदंतींभयविव्हलां॥त्वंचपाषाणरूपा
चविचारंकुरुकर्मतः॥४७॥गौतमउवाच॥ त्वांजानामिमनःशुद्धांसुव्रतांचपतिव्रतां॥त्यक्ष्यामिचतथापित्वांपरवीर्यंचबिभ्र
तीं ॥४८॥ परभोग्याचयाकांतासाऽशुद्धासर्वकर्मसु ॥ तांयोगच्छेन्महामूढोनरकंतस्यकल्पकं॥ ४९ ॥अन्नंविष्ठाजलंमूत्रंपर
भोग्याश्चनिश्चितं ॥ उपस्पृशेन्नतस्याश्चहंतिपुण्यंपुराकृतं ॥ ५० ॥ अनिच्छयाचशृंगारेस्त्रीजारेणनदुष्यति ॥ दुष्टास्त्रीनि
श्चितंसाध्वीस्वेच्छाशृंगारकर्मणि ॥ ५१ ॥ त्वंशक्रंस्वामिनंमत्वासुखंभुक्त्वारतिंगृहे ॥ पश्चाद्बभूवतेज्ञानंमांदृष्ट्वाचनिशा
मय ॥ ५२ ॥ गच्छगच्छमहारण्यंभवपाषाणरूपिणी ॥ रामपादांगुलिस्पर्शात्सद्यःपूताभविष्यसि ॥ ५३ ॥ मांसंप्राप्स्य
सितत्पुण्यात्पुनरेवागमिष्यसि ॥ गच्छकांतेमहारण्यमित्युक्त्वातपसेययौ ॥ ५४ ॥ इत्येवंकथितंसर्वंमहेंद्रदर्पभंजनं ॥
पुनःसंप्राप्यलक्ष्मींचविभोश्चकृपयामुने ॥ ५५ ॥ इतिश्रीब्र० कृष्णजन्मखंडेएकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ नारद
उ० ॥ ब्रह्मन्केनप्रकारेणरामोदाशरथिःस्वयं ॥ चकारमोक्षणंकुत्रयुगेगौतमयोषितः ॥१॥ रामावतारंसुखदंसमासेनमनो
हरं ॥ कथयस्वमहाभागश्रोतुंकौतूहलंमम ॥ २ ॥ श्रीनारायणउ० ॥ ब्रह्मणाप्रार्थितोविष्णुर्जातोदशरथगृहे ॥ कौशल्या
यांचभगवान्त्रेतायांचमुदान्वितः ॥३॥ कैकेय्यांभरतश्चैवरामतुल्योगुणेनच ॥ लक्ष्मणश्चापिशत्रुघ्नःसुमित्रायांगुणार्णवः
॥४॥ विश्वामित्रप्रेषितश्चश्रीरामश्चसलक्ष्मणः ॥प्रययौमिथिलांरम्यांसीताग्रहणहेतवे ॥५॥ दृष्ट्वापाषाणरूपांचरामोवर्त्म

निकामिनीम् ॥ विश्वामित्रंचपप्रच्छकारणंजगदीश्वरः ॥ ६ ॥ रामस्यवचनंश्रुत्वाविश्वामित्रोमहातपाः ॥ उवाचतत्रध
र्मिष्ठोरहस्यंसर्वमेवच ॥ ७ ॥ कारणंतन्मुखाच्छ्रुत्वारामोभुवनपावनः ॥ पस्पर्शपादांगुलिनासाबभूवचपद्मिनी ॥ ८ ॥
साराममाशिषंकृत्वाप्रययौभर्तृमंदिरं ॥ शुभाशिषंददौतस्मैभार्यासंप्राप्यगौतमः ॥ ९ ॥ रामश्चमिथिलांगत्वाधनुर्भंगंशिव
स्यच॥चकारपाणिग्रहणंसीतायाश्चैवनारद ॥ १० ॥ कृत्वाविवाहंराजेंद्रोभृगुदर्पंनिहत्यच ॥ अयोध्यांप्रययौरम्यांक्रीडा
कौतुकमंगलैः ॥ ११ ॥ राजापुत्रंनृपंकर्तुंमियेषकृतसादरं ॥ सप्ततीर्थोदकंतूर्णमानीयमुनिपुंगवान् ॥ १२ ॥ कृत्वाधिवासं
श्रीरामंसर्वमंगलसंयुतं ॥ दृष्ट्वाभरतमाताचकैकेयीशोकविह्वला ॥ १३ ॥ वरयामासराजानंपूर्वमंगीकृतंवरम् ॥ रामस्यव
नवासंचराजत्वंभरतस्यच ॥ १४ ॥ वरंदातुंमहाराजोनेयेषप्रेममोहितः ॥ धर्मसत्योभयेनैवोवाचरामोनृपंसुधीः ॥ १५ ॥
श्रीरामउवाच ॥ ॥ तडागशतदानेनयत्पुण्यंलभतेनरः ॥ ततोधिकंचलभतेवापीदानेननिश्चितं ॥ १६ ॥ दशवापीप्रदानेनय
त्पुण्यंलभतेनरः ॥ ततोधिकंचलभतेपुण्यंकन्याप्रदानतः ॥ १७ ॥ दशकन्याप्रदानेनयत्पुण्यंलभतेनरः ॥ ततोधिकंचलभ
तेयज्ञैकेननराधिप ॥ १८ ॥ शतयज्ञेनयत्पुण्यंलभतेपुण्यकृज्जनः ॥ ततोधिकंचलभतेपुत्रास्यदर्शनेनच ॥ १९ ॥ दर्शनेशतपु
त्राणांयत्पुण्यंलभतेनरः ॥ तत्पुण्यंलभतेनूनंपुण्यवान्सत्यपालनात् ॥ २० ॥ नहिसत्यात्परोधर्मोनानृतात्पातकंपरं ॥ न
हिगंगासमंतीर्थंनदेवःकेशवात्परः ॥ २१ ॥ नास्तिधर्मात्परोबंधुर्नास्तिधर्मात्परंधनं ॥ धर्मात्प्रियःपरःकोवास्वधर्मरक्षयत्न
तः ॥ २२ ॥ स्वधर्मेरक्षितेतातशश्वत्सर्वत्रमंगलं ॥ यशस्यंसुप्रतिष्ठाचप्रतापःपूजनंपरं ॥ २३ ॥ चतुर्दशाब्दधर्मेणत्यक्त्वागृह
सुखंभ्रमन् ॥ वनवासंकरिष्यामिसत्यस्यपालनायते ॥ २४ ॥ कृत्वासत्यंचशपथमिच्छयानिच्छयाथवा ॥ नकुर्यात्पालनं

योहिभस्मांततस्यसूतक ॥ २५ ॥ कुंभीपाकसपचतियावच्चंद्रदिवाकरौ ॥ ततोमूकोभवेत्कुष्ठीमानवःसप्तजन्मसु ॥ २६ ॥ इ
त्येवमुक्त्वाश्रीरामोविधायवल्कलंजटां ॥ प्रययौचमहारण्येसीतयालक्ष्मणेनच ॥ २७ ॥ पुत्रशोकान्महाराजस्तत्या
जस्वतनुंमुने ॥ पालनायपितुःसत्यंरामोबभ्रामकानने ॥ २८ ॥ कालांतरेमहारण्येभगिनीरावणस्यच ॥ भ्रमंतीकाननेघोरे
भर्त्रासार्द्धंसुकौतुकात् ॥ २९ ॥ ददर्शरामंकुलटाकामार्ताराक्षसीतदा ॥ पुलकांचितसर्वांगीमूर्छामापस्मरेणच ॥ ३० ॥ श्रीरा
मनिकटंगत्वासस्मितोवाचकामुकी ॥ शश्वद्यौवनसंयुक्तातिप्रौढाकामदुर्मदा ॥ ३१ ॥ ॥ शूर्पणखोवाच ॥ ॥ हेरामहेघ
नश्यामरूपधामगुणान्वित ॥ भावानुरक्तांवनितांमांगृहाणसुनिर्जने ॥ ३२ ॥ श्रुत्वाशूर्पणखावाक्यंधर्मसंस्मृत्यधार्मिकः
उवाचमधुरंवाक्यंशापभीतश्चनारद ॥ ३३ ॥ ॥ श्रीरामउवाच ॥ ॥ अंबमातःसभार्योहमभार्यंगच्छमेनुजं ॥ दुःखंप्रियो
न्यांप्रभजेदितरंचसुखालयं ॥ ३४ ॥ रामस्यवचनंश्रुत्वाप्रययौलक्ष्मणंमुदा ॥ ददर्शलक्ष्मणंशांतंकांतंचलक्षणान्वितं ॥ ३५
मांभजस्वमहाभागेत्युवाचचपुनःपुनः ॥ लक्ष्मणस्तद्वचःश्रुत्वातामुवाचकुतूहलात् ॥ ३६ ॥ ॥ लक्ष्मणउवाच ॥ ॥
विहायरामंसर्वेशंहेमूढेदासमिच्छसि ॥ सीतादासीचमत्पत्नीसीतादासोहमेवच ॥ ३७ ॥ भवसीतासपत्नीत्वंगच्छरामं
मदीश्वरं ॥ तवपुत्रोभविष्यामिसीतायाश्चयथासति ॥ ३८ ॥ लक्ष्मणस्यवचःश्रुत्वाकामेनह्वतमानसा ॥ उवाचलक्ष्म
णंमूढाशुष्ककंठोष्ठतालुकी ॥ ३९ ॥ ॥ शूर्पणखोवाच ॥ ॥ यदित्यजसिमांमूढकामात्स्वयमुपस्थितां
युवयोश्चविपत्तिश्चभविष्यतिनसंशयः ॥ ४० ॥ ब्रह्माचमोहिनींत्यक्त्वाविश्वेऽपूज्योबभूवसः ॥ रंभाशापेनदक्षश्चछागमस्तो
बभूवसः ॥ ४१ ॥ स्वर्वैद्यश्चोर्वशीशापात्यज्ञभागविवर्जितः ॥ रूपहीनःकुबेरश्चमेनाशापेनलक्ष्मण ॥ ४२ ॥ कामोघृता

चीशापेनबभूवभस्मसात्तुशिवात्तू ॥ बलिर्मदालसाशापात्तुभ्रष्टराज्योबभूवह ॥४३॥ शापेनमिश्रकेश्याश्चत्हतभार्योबृहस्प
तिः ॥ ममशापात्तथारामोत्हतभार्योभविष्यति ॥ ४४॥ कामातुरांयौवनस्थांभार्यांस्वयमुपस्थितां ॥ नत्यजेद्धर्मभीतश्चश्रु
तंमाध्यंदिनेपुरा ॥ ४५ ॥ इहत्यक्त्वाविपद्ग्रस्तःपरत्रनरकंव्रजेत्तू ॥ श्रुत्वाशूर्पणखावाक्यमर्द्धचंद्रेणलक्ष्मणः ॥ ४६ ॥ चि
च्छेदनासिकांतस्याःक्षुरधारेणलीलया ॥ तस्याभ्राताचयुयुधेबलवान्खरदूषणः ॥ ४७ ॥ ससैन्योलक्ष्मणास्त्रेणसजगाम
यमालयं ॥ चतुर्दशसहस्रंचराक्षसान्खरदूषणं ॥ ४८ ॥ मृतान्दृष्ट्वाशूर्पणखाभर्त्सयामासरावणम् ॥ सर्वंनिवेदनंकृत्वा
जगामपुष्करंतदा ॥४९॥ ब्रह्मणश्चवरंप्रापकृत्वाचदुष्करंतपः ॥ उवाचतादृशींदृष्ट्वानिराहारांतपस्विनीम् ॥५०॥सर्वज्ञस्त
न्मनोमत्वाकृपासिंधुश्चनारद ॥ ब्रह्मोवाच ॥ अप्राप्यरामंदुष्प्रापंकरोषिदुष्करंतपः ॥५१ ॥ जितेंद्रियाणांप्रवरंलक्ष्मणंध
र्मलक्षणं ॥ ब्रह्मविष्णुशिवादीनामीश्वरंप्रकृतेःपरं ॥ ५२॥ जन्मांतरेचभर्तारंप्राप्स्यसित्वंवरानने ॥ इत्येवमुक्त्वाब्रह्मा
चजगामस्वालयंमुदा ॥ ५३ ॥ देहंतत्याजसावन्हौसाचकुब्जाबभूवह ॥ अथशूर्पणखावाक्यात्तूकोपात्कंपितविग्रहः ॥
॥ ५४ ॥ जहारमाययासीतांमायावीराक्षसेश्वरः ॥ सीतांनदृष्ट्वारामश्चमूर्च्छांप्रापाचिरंमुने ॥ ५५॥ चेतनांकारयामासभ्रा
ताचाध्यात्मिकेनच ॥ ततोबभ्रामगहनंशैलंचकंदरंनदं ॥ ५६ ॥ सचाहर्निशंशोकार्तोमुनीनामाश्रमंमुने ॥ चिरमन्वेषणंकृ
त्वानदृष्ट्वाजानकींविभुः ॥५७॥ चकारमित्रतांरामःसुग्रीवेणस्वयंप्रभुः ॥ निहत्यवालिनंबाणैर्ददौराज्यंचलीलया ॥५८॥
सुग्रीवायचमित्रायस्वीकारपालनायवै॥ दूतान्प्रस्थापयामाससर्वत्रवानरेश्वरः॥ ५९ ॥ तस्थौसुग्रीवभवनेश्रीरामश्चस
लक्ष्मणः ॥ हनूमतेवरंदत्वा[illegible]यकं ॥६० ॥ सीतायैशुभसंदेशंप्राणधारणकारणं ॥ तंचप्रस्थापयामांसदक्षिणां

दिशमुत्तमां ॥ ६१ ॥ सुप्रात्य॥लगनदत्वापादरेणूनसुदुर्लभान् ॥ हनुमान्प्रययौलंकांसीतान्वेषणहेतवे ॥ ६२ ॥ रामाद
धीतसंदेशोययौरुद्रकलोद्भवः ॥ अशोककाननेसीतांददर्शशोककर्शितां ॥ ६३ ॥ निराहारामतिकृशांकुह्वांचंद्रकलामिव ॥
सततंरामरामेतिजपंतींभक्तिपूर्वकं ॥ ६४ ॥ बिभ्रतींचजटाभारंतप्तकांचनसंन्निभाम् ॥ ध्यायमानांपदाब्जंचश्रीरामस्य
दिवानिशं ॥ ६५ ॥ शुद्धशय्यांसुशीलांचसुव्रतांचपतिव्रतां ॥ महालक्ष्मीलक्ष्मयुक्तांप्रज्वलंतींस्वतेजसा ॥ ६६ ॥ पुण्यदां
सर्वतीर्थानांदृष्ट्वाभुवनपावनीं ॥ प्रणम्यमातरंदृष्ट्वारुदंतींवायुनंदनः ॥ ६७ ॥ रत्नांगुलीयंरामस्यददौतस्यैमुदान्वितः ॥
रुरोदधर्मीतांदृष्ट्वाधृत्वातच्चरणांबुजम् ॥ ३८ ॥ उवाचरामसंदेशंसीताजीवनरक्षणम् ॥ ॥ हनुमानुवाच ॥ ॥ पारंसमु
द्रेश्रीरामःसन्नद्धश्चसलक्ष्मणः ॥ ६९ ॥ बभूवराममंत्रंचसुग्रीवोबलवान्कपिः ॥ रामश्चवालिनंहत्वाराज्यंनिष्कंटकंददौ ॥
॥ ७० ॥ सुग्रीवायचमित्रायतद्भार्यांवालिनाहृतां ॥ सुग्रीवश्चतवोद्धारंस्वीचकारचधर्मतः ॥ ७१ ॥ वानराश्चययुःसर्वेतवा
न्वेषणकरणात् ॥ प्राप्यमंगलवार्ताचमत्तोराजीवलोचनः ॥ ७२ ॥ गंभीरंसागरंबध्वासोऽचिरेणागमिष्यति ॥ निहत्य
रावणंपापंसपुत्रंचसबांधवं ॥ ७३ ॥ करिष्यत्यचिरेणैवहेमातस्तवमोक्षणं ॥ अद्यरत्नमयींलंकांनिःशंकस्त्वत्प्रसादतः ॥
॥ ७४ ॥ भस्मीभूतांकरिष्यामिमातःपश्यचसस्मितं ॥ मर्कटीडिंभतुल्यांचलंकांपश्यामिसुव्रते ॥ ७५ ॥ मूत्रतुल्यंसमुद्रंच
शरावमिवभूतलं ॥ पिपीलिकासंघमिवससैन्यंरावणंतथा ॥ ७६ ॥ संहर्तुंचसमर्थोहंमुहूर्तार्धेनलीलया ॥ रामप्रतिज्ञारक्षार्थं
नहनिष्यामिसांप्रतं ॥ ७७ ॥ स्वस्थाभवमहाभागेत्यजभीतिमदीश्वरि ॥ वानरस्यवचःश्रुत्वारुरोदोच्चैर्मुहुर्मुहुः ॥ ७८ ॥
उवाचवचनंभीतासीतारामपतिव्रता ॥ सीतोवाच ॥ अयेजीवतिमेरामोमच्छोकार्णवदारुणात् ॥ ७९ ॥ अपिमेकुशली

नाथःकौसल्यानंदनःप्रभुः ॥ कीदृशश्चकृशांगश्चजानकीजीवनोधुना ॥८०॥ किमहारश्चकिंभुंक्तेममप्राणाधिकःप्रियः ॥
अपिपारेसमुद्रस्यसत्यंसीतापतिःस्वयं ॥८१॥ अपिसत्यंससन्नद्धोनशोकेनहतःप्रभुः ॥ अपिस्मरतिमांपापांस्वामिनोदुः
खरूपिणीं ॥ ८२ ॥ मदर्थैकतिदुःखंवासंप्रापसमदीश्वरः ॥ हारोनारोपितःकंठेपुराव्यवहितोरतौ ॥ ८३ ॥ अधुनैवावयोर्म
ध्येसमुद्रःशतयोजनः ॥अपिद्रक्ष्यामितंरामंकरुणासागरंप्रभुं ॥८४॥ कांतंशांतंनितांतंचधर्मिष्ठंधर्मकर्मणि ॥ अयिसेवां
करिष्यामिपादपद्मेपुनःप्रभोः ॥८५॥ पतिसेवाविहीनायामूढायाजीवनंवृथा ॥ अयिमेधर्मपुत्रश्चसत्यंजीवतिलक्ष्मणः
॥८६॥ मच्छोकसागरेमग्नोभग्नदर्पोमयाविना ॥ वीराणांप्रवरोधर्मीदेवकल्पश्चदेवरः॥ ८७॥ अपिसत्यंससंन्नद्धोमत्प्रभो
रनुजःसदा ॥ अपिद्रक्ष्यामिसत्यंतंलक्ष्मणंधर्मलक्षणं ॥ प्राणानामधिकंप्रेम्णाधन्यंपुण्यस्वरूपिणं ॥८८॥ इत्येवंवच
नंश्रुत्वादत्वाप्रत्युत्तरंशुभम् ॥ भस्मीभूतांचलंकांचचकारलीलयामुने ॥ ८९ ॥ पुनःप्रबोधंतस्यैचदत्वावायुसुतःकपिः ॥
प्रययौलीलयावेगाद्यत्रराजीवलोचनः ॥ ९०॥ सर्वंतत्कथयामासवृत्तांतंमातुरेवच ॥ सीतामंगलवृत्तांतंश्रुत्वारामोरुरो
दच ॥ ९१ ॥ रुरोदोच्चैर्लक्ष्मणश्चसुग्रीवश्चापिनारद ॥ वानरारुरुदुःसर्वेमहाबलपराक्रमाः ॥ ९२ ॥ निबध्यसेतुंलंकांचप्र
ययौरघुनंदनः ॥ ससैन्यःसानुजःशीघ्रंसन्नद्धश्चापिनारद ॥ ९३ ॥ निहत्यरावणंरामोरणंकृत्वासबांधवं ॥ चकारमोक्षणं
ब्रह्मन्सीतायाश्चशुभेक्षणे ॥९४॥ कृत्वापुष्पकयानेनसीतांसत्यपरायणां॥ अयोध्यांप्रययौशीघ्रंक्रीडाकौतुकमंगलैः॥
॥ ९५ ॥ क्रीडांचकारभगवान्सीतांकृत्वाचवक्षसि ॥ विजहौविरहज्वालांसीतारामश्चतत्क्षणं ॥९६॥ सप्तद्वीपेश्वरोरामो
बभूवपृथिवीतले ॥ बभवनिखिलापृथ्वीआधिव्याधिविवर्जिता ॥ ९७॥ बभूवतूरामपुत्रौधार्मिकौचकुशीलवौ ॥ तयो

श्चपुत्रैःपौत्रैश्चसूर्यवंशोद्भवानृपाः ॥ १८ ॥ इतितेकथितंवत्सश्रीरामचरितंशुभं ॥ सुखदंमोक्षदंसारंपारपोतंभवार्णवे ॥ १९ ॥
इतिश्रीब्र॰ महापु॰ श्रीकृष्णजन्मखंडेश्रीरामचरितंद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ नारायणउवाच ॥ ॥ अथकंसोवि
चिंत्यैवंदृष्ट्वादुःस्वप्नमेवच ॥ समुद्विग्नोमहाभीतोनिराहारोनिरुत्सुकः ॥ १ ॥ पुत्रंमित्रंबंधुगणंबांधवंचपुरोहितम् ॥ समा
नीयसभामध्येतानुवाचसुदुःखितः ॥ २ ॥ ॥ कंसउवाच ॥ ॥ मयादृष्टोनिशीथेयोदुःस्वप्नोहिभयप्रदः ॥ निबोधत
बुधाःसर्वेबांधवाश्चपुरोहिताः ॥ ३ ॥ बिभ्रतीरक्तपुष्पाणांमालांसारक्तचंदनं ॥ रक्तांबरंखड्गतीक्ष्णंखर्परंचभयंकरं ॥ ४ ॥
प्रकृत्वाट्टाट्टहासंचलोलजिव्हाभयंकरी ॥ अतीववृद्धाकृष्णांगीनगरेममनृत्यति ॥ ५ ॥ मुक्तकेशीच्छिन्ननासाकृष्णाकृ
ष्णांबरापिया ॥ विधवासामहाशूद्रीमामालिंगितुमिच्छति ॥ ६ ॥ मलिनंचैलखंडंचबिभ्रतीरुक्षमूर्द्धजान् ॥ दधतींचूर्णंति
लकंकपालेममवक्षसि ॥ ७ ॥ कृष्णवर्णानिपक्वानिछिन्नभिन्नानिसत्यक ॥ पतंतिकृत्वाशब्दांश्चशश्वत्तालफलानिच ॥ ८ ॥
कुचैलोविकृताकारोम्लेच्छोहिरुक्षमूर्द्धजः ॥ ददातिमह्यंभूषायांच्छिन्नभिन्नकपर्दकान् ॥ ९ ॥ महारुष्टाचदिव्यास्त्रीपतिपु
त्रवतीसती ॥ बभंजपूर्णकुंभंचसाभिशप्यपुनःपुनः ॥ १० ॥ अम्लानाम्मूढमालांचरक्तचंदनचर्चिताम् ॥ ददातिमह्यंविप्र
श्चमहारुष्टोतिशप्यच ॥ ११ ॥ क्षणमंगारवृष्टिश्चभस्मवृष्टिःक्षणंक्षणम् ॥ क्षणंक्षणंरक्तवृष्टिर्भवेच्चनगरेमम ॥ १२ ॥ वानरं
वायसंश्वानंभल्लूकंसूकरंखरं ॥ पश्यामिविकटाकारंशब्दंकुर्वंतमुल्बणम् ॥ १३ ॥ पश्यामिशुष्ककाष्ठानांराशिमम्लानक
ज्जलं ॥ अरुणोदयवेलायांकपीन्छिन्ननखानिच ॥ १४ ॥ पीतवस्त्रपरीधानाशुक्लचंदनचर्चिता ॥ बिभ्रतीमालतीमालांर
त्नभूषणभूषिता ॥ १५ ॥ क्रीडाकमलहस्तासासिंदूरबिंदुशोभिता ॥ कृत्वाभिशापंमांरुष्टायातिमन्मंदिरात्सती ॥ १६ ॥

पाशहस्तांश्चपुरुषान्मुक्तकेशान्भयंकरान् ॥ अतिरुक्षांश्चपश्यामिविशंतोनगरंमम ॥ १७ ॥ नग्ननारींमुक्तकेशींनृत्यंतीं
चगृहेगृहे ॥ अतीवविकृताकारांपश्यामिसस्मितांसदा ॥ १८ ॥ छिन्ननासाचविधवामहाशूद्रीदिगंबरा ॥ सातैलाभ्यंगितं
मांचकरोत्यतिभयंकरी ॥ १९ ॥ निवार्णांगारयुक्ताश्चभस्मपूर्णादिगंबराः ॥ अतिप्रभातसमयेचित्राःपश्यामिसस्मि
ताः ॥ २० ॥ पश्यामिचविवाहंचनृत्यगीतमनोहरम् ॥ रक्तवस्त्रपरीधानान्पुरुषान्रक्तमूर्द्धजान् ॥ २१ ॥ रक्तंवमंतंपुरु
षंनृत्यंतंनग्नमुल्बणम् ॥ धावंतंचशयानंचपश्यामिसस्मितंसदा ॥ २२ ॥ राहुग्रस्तंचगगनेमंडलंचंद्रसूर्ययोः ॥ एकका
लेचपश्यामिसर्वंग्रासंचबांधवाः ॥ २३ ॥ उल्कापातंधूमकेतुंभूकंपंराष्ट्रविप्लवम् ॥ झंझावातंमहोत्पातंपश्यामिचपुरोहित ॥
॥ २४ ॥ वायुनाघूर्णमानांश्चच्छिन्नस्कंधान्महीरुहान् ॥ पतितान्पर्वतांश्चैवपश्यामिपृथिवीतले ॥ २५ ॥ पुरुषंछिन्नशिर
संनृत्यंतंनग्नमुच्छ्रितम् ॥ मुंडमालाकरंघोरंपश्यामिचगृहेगृहे ॥ २६ ॥ दग्धंसर्वाश्रमंभस्मपूर्णमंगारसंकुलम् ॥ हाहाका
रंचकुर्वंतंसर्वंपश्यामिसर्वतः ॥ २७ ॥ इत्येवमुक्त्वाराजासविरराम सभातले ॥ दृष्ट्वास्वप्नंबांधवाश्चनतमुक्त्वानिशश्वसुः
॥ २८ ॥ जहारचेतनांसद्यःसत्यकश्चपुरोहितः ॥ मत्वाविनाशंकंसस्ययजमानस्यनारद ॥ २९ ॥ रुरोदनारीवर्गश्चपिता
माताचशोकतः ॥ मेनेविनाशकालंचसद्यःस्वयमुपस्थितम् ॥ ३० ॥ इतिश्रीब्रह्मवैवर्तेमहापुराणेश्रीकृष्णजन्मखंडेकंस
दुःस्वप्नकथनंनामत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ छ ॥ श्रीनारायणउवाच ॥ ॥ सर्वंकृत्वापरामर्शंसत्यकश्चपुरोहितः
॥ बुद्धिमान्छुक्रशिष्यश्चतमुवाचहितंमुने ॥ १ ॥ ॥ सत्यकउवाच ॥ ॥ भयंत्यजमहाभागभयांकिंतेमयिस्थिते ॥ कुरु
यागंमहेशस्यसर्वारिष्टविनाशनम् ॥ २ ॥ यागोधनुर्मखोनामवह्न्नोबहुदक्षिणः ॥ दुःस्वप्नानांनाशकरःशत्रुभीतिविनाश

कः ॥ ३ ॥ आध्यात्मिकमाधिदैवमाधिभौतिकमुत्कटं ॥ एषांत्रिविधोत्पातानांखंडनोभूतिवर्धनः ॥ ४ ॥ यागेसमाप्तेशं भुश्चजरामृत्युहरंवरं ॥ ददातिसाक्षाद्भवतिदाताचसर्वसंपदां ॥ ५ ॥ चकारेमंचयागंचपुराबाणोमहाबलः ॥ नंदीपरशुराम श्चतन्नश्चबलिनांवरः ॥ ६ ॥ पुराददौधनुरिदंशिवोनंदीश्वरायच ॥ यागेनभूत्वासिद्धःसददौबाणायधार्मिकः ॥ ७ ॥ कृत्वा यागंमहासिद्धोददौरामायपुष्करे ॥ तुभ्यंददौपरशुरामःकृपयाचकृपानिधिः ॥ ८ ॥ सहस्रहस्तपरिमितंदैर्घ्येतिकठिनंनृप ॥ दशहस्तप्रशस्तंचशंकरेच्छाविनिर्मितं ॥ ९ ॥ पशुपतेःपाशुपतंयुक्तयानेनदुर्वहं ॥ सर्वेभंक्तुंनशक्ताश्चदेवंनारायणंविना ॥ ॥ १० ॥ यागेचधनुषःपूजांशंकरस्यतुशंकरे ॥ कुरुशीघ्रंशुभार्हंचसर्वान्कुरुनिमंत्रणं ॥ ११ ॥ अस्मिन्यागेधनुर्भंगोभवे धदिनराधिप ॥ विनाशोयजमानस्यभविष्यतिनसंशयः ॥ १२ ॥ भग्नेधनुषियागश्चभग्नोभवतिनिश्चितं ॥ फलंददातिको वात्रचानिष्पन्नेचकर्मणि ॥ १३ ॥ ब्रह्माचधनुषोमूलेमध्येनारायणःस्वयं ॥ अग्रेचोग्रप्रतापश्चमहादेवोमहामते ॥ १४ ॥ धनुर्हंति विकारंचसद्रत्नखचितंवरं ॥ ग्रीष्ममध्यान्हमार्तंडप्रभाप्रच्छन्नकारणं ॥ १५ ॥ अशक्तश्चनमयितुमनंतश्चमहा बलः ॥ सूर्यश्चकार्तिकेयश्चकाकथान्यस्यभूमिप ॥ १६ ॥ त्रिपुरारिःपुरानेनजघानत्रिपुरंमुदा ॥ निर्भयंकुरुस्वच्छंदंमंग लार्हंमहोत्सवे ॥ १७ ॥ सत्यकस्यवचःश्रुत्वाचंद्रवंशविवर्धनः ॥ उवाचकंसःसर्वार्थेसततंचहितैषिणं ॥ १८ ॥ कंसउवाच ॥ वसुदेवगृहेजज्ञेमद्वधीकुलनाशनः ॥ स्वच्छंदंनंदगेहेचवर्धतेनंदनंदनः ॥ १९ ॥ मद्बंधुवर्गान्शूरांश्चमंत्रिणःसुविशारदान् ॥ भगिनींपूतनांपूतांजघानबालकोबली ॥ २० ॥ गोवर्धनंदधारैककरेणबलवर्धनः ॥ महेंद्रस्यचशूरस्यचकारचपराभ वम् ॥ २१ ॥ ब्राह्मणंदर्शयामासब्रह्मरूपंचराचरं ॥ निवहंबालवत्सानांचकारकृत्रिमंमुदा ॥ २२ ॥ तमेवबलिनंहंतुमंत्र

णंकुरुसत्यक ॥ ममशत्रुर्विनातेननास्तीहधरणीतले ॥ २३ ॥ नहिस्वर्गेनपातालेत्रिषुलोकेषुनिश्चितं ॥ संतिसंतश्चराजा
नःसर्वत्रममबांधवाः ॥ २४ ॥ महातपस्वीब्रह्माचतपस्वीशंकरःस्वयं ॥ विष्णुःसर्वत्रसर्वात्मासमदर्शीसनातनः ॥ २५ ॥
नंदपुत्रंनिहत्याहंत्रिषुलोकेषुपूजितः ॥ सार्वभौमोभविष्यामिसप्तद्वीपेश्वरोमहान् ॥ २६ ॥ स्वर्गेनिहत्यस्वर्ग्यंचदुर्बलंदै
त्यनिर्जितं ॥ भविष्यामिमहेंद्रश्चतत्रनिर्जित्यभास्करं ॥ २७ ॥ यक्ष्मग्रस्तंचचंद्रंचममैवपूर्वपूरुषम् ॥ वायुंकुबेरंवरुणं
यमंजेष्यामिनिश्चितं ॥ २८ ॥ गच्छनंदव्रजंशीघ्रंनंदंचनंदनंदनं ॥ तद्भ्रातरंचबलिनंबलमानयसांप्रतं ॥ २९ ॥ कंसस्यव
चनंश्रुत्वातमुवाचससत्यकः ॥ हितंसत्यंनीतिसारंपरंसामयिकंतथा ॥ ३० ॥ ॥ सत्यकउवाच ॥ ॥ अक्रूरमुद्धवंवापि
वसुदेवमथापिवा ॥ प्रस्थापयमहाभागनंदव्रजमभीप्सितं ॥ ३१ ॥ सत्यकस्यवचःश्रुत्वावसंततत्रसंसदि ॥ स्वर्णसिंहा
सनस्थंचवसुदेवमुवाचसः ॥ ३२ ॥ ॥ राजेंद्रउवाच ॥ ॥ तत्वज्ञोनीतिशास्त्राणांत्वमुपायविशारदः ॥ व्रजनंदव्रजं
बंधोवसुदेवसुतालयं ॥ ३३ ॥ वृषभानंचनंदंचबलंचनंदनंदनम् ॥ शीघ्रमानययज्ञेत्रसर्वंगोकुलवासिनं ॥ ३४ ॥ गृहीत्वा
पत्रिकांदूतागच्छंतुचचतुर्दिशं ॥ नृपान्मुनिगणान्सर्वान्कर्तुंविज्ञापनंमुदा ॥ ३५ ॥ नृपस्यवचनंश्रुत्वाशुष्ककंठोष्ठतालु
कः ॥ उवाचवचनंब्रह्मन्हृदयेनविदूयता ॥ ३६ ॥ ॥ वसुदेवउवाच ॥ ॥ नियुक्तमत्रराजेंद्रगमनंममसांप्रतं ॥ विज्ञापि
तुंनंदव्रजंवसुदेवस्यनंदनम् ॥ ३७ ॥ यद्यायातोनंदपुत्रोयागेतेचमहोत्सवे ॥ अवश्यंतद्विरोधश्चभविष्यतित्वयासह ॥
॥ ३८ ॥ तमहंचसमानीयकारयिष्यामिसंयुतम् ॥ इतिमेनहिभद्रंचविघ्नस्तस्यतवापिच ॥ ३९ ॥ पित्रानीतोमृतःकृष्णइ
तिसर्वोवदिष्यति ॥ वसुदेवःसतद्वाराजघानन्नृपमेवच ॥ ४० ॥ द्वयोरेकतरस्यापिसद्योमृत्युर्भविष्यति ॥ पतिष्यंतिचशू

राश्चनास्तियुद्धनिरामिष ॥ ४१ ॥ वसुदेववचःश्रुत्वारक्तपंकजलोचनः ॥ खड्गंगृहीत्वातंहंतुंप्रययौनृपतीश्वरः ॥ ४२ ॥
हाहेतिकृत्वापुत्रंचवारयामासतत्क्षणं ॥ उग्रसेनोमहाराजमतीवबलवान्मुने ॥ ४३ ॥ स्वपीठाद्वसुदेवश्चकोपाविष्टोगृहं
ययौ ॥ अक्रूरंप्रेरयामासगंतुंनंदव्रजंनृपः ॥ ४४ ॥ दूतान्प्रस्थापयामासशीघ्रंप्रतिदिशंतथा ॥ आययुर्मुनयःसर्वेनृपाश्च
सपरिच्छदाः ॥ ४५ ॥ दिक्पालाश्चसुराःसर्वेब्राह्मणाश्चतपस्विनः ॥ सनकश्चसनंदश्चवोढुःपंचशिखस्तथा ॥ ४६ ॥
सनत्कुमारोभगवान्प्रज्वलन्ब्रह्मतेजसा ॥ कपिलश्चासुरिःपैलःसुमंतुश्चसनातनः ॥ ४७ ॥ पुलहश्चपुलस्त्यश्चभृ
गुश्चक्रतुरंगिराः ॥ मरीचिःकश्यपश्चैवदक्षोत्रिश्च्यवनस्तथा ॥ ४८ ॥ भरद्वाजश्चव्यासश्चगौतमश्चपराशरः ॥ प्रचे
ताश्चवसिष्ठश्चसंवर्तश्चबृहस्पतिः ॥ ४९ ॥ कात्यायनोयाज्ञवल्क्योप्युत्तंकःसौभरिस्तथा ॥ पर्वतोदेवलश्चैवजैगीषव्य
श्चजैमिनिः ॥ ५० ॥ विश्वामित्रश्चसुतपाःपिप्पलःशाकटायनः ॥ जाबालिर्जांगलिश्चैवपिशलिश्चशिलालिकः ॥ ५१ ॥
आस्तिकश्चजरत्कारुस्तथाकल्याणमित्रकः ॥ दुर्वासावामदेवश्चऋष्यशृंगोविभांडकः ॥ ५२ ॥ पथिःकविःकणादश्चकौ
शिकःपाणिनिस्तथा ॥ कौत्सोघमर्षणश्चैववाल्मीकिर्लोमहर्षणः ॥ ५३ ॥ मार्कंडेयोमृकंडुश्चपर्शुरामश्चसांकृतिः ॥ अगस्त्य
श्चतथावांतस्तथाऽन्येमुनयोमुने ॥ ५४ ॥ सशिष्याश्चसपुत्राश्चब्राह्मणाश्चतपस्विनः ॥ जरासंधोदंतवक्रोदांभिकोद्रविडा
धिपः ॥ ५५ ॥ शिशुपालोभीष्मकश्चभगदत्तश्चमुद्गलः ॥ धृतराष्ट्रोधूमकेशोधूम्रकेतुश्चशंबरः ॥ ५६ ॥ शल्यःसत्राजितःशं
कुर्नृपाश्चान्येमहाबलाः ॥ भीष्मोद्रोणःकृपाचार्योत्यश्वत्थामामहाबलः ॥ ५७ ॥ भूरिश्रवाश्चशाल्वश्चकैकेयःकौशलस्तथा
सर्वान्संभाषयामासमहाराजोयथोचितम् ॥ सत्यकोपज्ञदिवसंचकारचशुभक्षणं ॥ ५८ ॥ ॥ इतिश्रीब्र॰म॰श्रीकृष्णज॰

कंसयज्ञकथनंनामचतुःषष्टितमोऽध्यायः ॥ ६४॥ ॥ श्रीनारायणउवाच ॥ ॥ कंसस्यवचनंश्रुत्वासोक्रूरोधर्मिणांवरः उवाचचोद्धवंशांतंशांतःप्रहृष्टमानसः ॥ १ ॥ ॥ अक्रूरउवाच ॥ ॥ सुप्रभाताघरजनीबभूवमेशुभंदिनं ॥ तुष्टाश्चगुरवो विप्रादेवामामितिनिश्चितं ॥ २ ॥ कोटिजन्मार्जितंपुण्यंममस्वयमुपस्थितं ॥ बभूवमेसमुत्पन्नंयद्यत्कर्मशुभाशुभं ॥ ३ ॥ चिच्छेदबंधनिगडंममबद्धस्यकर्मणा ॥ कारागाराच्चसंसारान्मुक्तोयामिहरेःपदं ॥४॥ सुहृदर्थीकृतोहंचकंसेनविदुषारुषा ॥ वरेणतुल्योदेवस्यक्रोधोममबभूवह ॥ ५ ॥ व्रजराजंसमाहर्तुंव्रजंयास्यामिसांप्रतं ॥ द्रक्ष्यामिपरमंपूज्यंभुक्तिमुक्तिप्रदा यिनं ॥ ६ ॥ नवीनजलदश्यामंनीलेंदीवरलोचनं ॥ पीतवस्त्रसमायुक्तकटिदेशविराजितं ॥ ७ ॥ धूलिधूसरितांगंचकिंवाचं दनचर्चितं ॥ अथवानवनीताक्तमंगंद्रक्ष्यामिसस्मितं ॥ ८ ॥ किंवाविनोदमुरलींवादयंतंमनोहरं ॥ किंवागवांसमूहंचचारयं तमितस्ततः ॥ ९ ॥ किंवावसंतंगच्छंतंशयानंवासुनिश्चितं ॥ निदेशंकीदृशंचाद्यंसुदृष्ट्वाचशुभेक्षणे ॥ १० ॥ यत्पादपद्मंध्या यंतेब्रह्मविष्णुशिवादयः ॥ नहिजानंतियस्यांतमनंतोनंतविग्रहाः ॥ ११ ॥ यत्प्रभावंनजानंतिदेवाःसंतश्चसंततं ॥ दासीनि युक्तायद्दास्येमहालक्ष्मीश्चलक्षिता ॥ १२ ॥ गंगायस्यपदांभोजान्निःसृतासत्वरूपिणी ॥ जन्ममृत्युजराव्याधिहराबाित्रिभु वनात्परा ॥ १३ ॥ दर्शनस्पर्शनाभ्यांचनृणांपातकनाशिनी ॥ ध्यायतेयत्पदांभोजंदुर्गादुर्गार्तिनाशिनी ॥ १४ ॥ त्रैलोक्य जननीदेवीमूलप्रकृतिरीश्वरी ॥ लोम्नांकूपेषुविश्वानिमहाविष्णोश्चयस्यच ॥ १५ ॥ असंख्यानिविचित्राणिस्थूलात्स्थू लतरस्यच ॥ सचयत्षोडशांशश्चयस्यसर्वेश्वरस्यच ॥ १६ ॥ तंद्रष्टुंयामिहेबंधोमायामानुषरूपिणं ॥ सर्वसर्वांतरात्मानंसर्व ज्ञंप्रकृतेःपरं ॥ १७॥ ब्रह्मज्योतिःस्वरूपंचभक्तानुग्रहविग्रहं ॥ निर्गुणंचनिरीहंचनिरानंदंनिराश्रयं ॥ १८ ॥ परमंपरमानं

दंसानंदंनंदनंदनं ॥ स्वेच्छामयंसर्वपरंसर्वबीजंसनातनं ॥ १९ ॥ वदंतियोगिनःशश्वत्ध्यायंतेहरर्निशंशिशुं ॥ मन्वंतरसहस्रं
चनिराहारःकृशोदरः ॥ २०॥ पद्मेपाद्मतपस्तेपेपुरापाद्मेतुयत्कृते ॥ पुनःकुरुतपस्यांचतदाद्रक्ष्यसिमामिति ॥ २१ ॥ सकृ
च्छब्दंचशुश्रावनददर्शंतथापितं ॥ तावत्कालंपुनस्तप्त्वावरंप्रापददर्शतं ॥ ईदृशंपरमेशंचद्रक्ष्याम्यद्यतमुद्धव ॥२२॥ पुराशं
भुस्तपस्तेपेयावद्दैब्रह्मणोवयः॥ ज्योतिर्मंडलमध्येचगोलोकेतंददर्शसः ॥२३॥ सर्वतत्त्वंसर्वसिद्धंममतत्त्वंपरंवरं ॥ संप्रापत
त्पदांभोजेभक्तिंचनिर्मलांपरां ॥ २४ ॥ चकारात्मसमंतंचयोभक्तोभक्तवत्सलः॥ ईदृशंपरमेशंचद्रक्ष्याम्यद्यतमुद्धव ॥ २५
सहस्रशक्रपातांतंनिराहारःकृशोदरः॥ यस्यानंतस्तपस्तेपेभक्त्याचपरमात्मनः ॥२६॥ तदाचात्मसमंज्ञानंददौतस्मैयईश्व
रः ॥ ईदृशंपरमेशंचद्रक्ष्याम्यद्यतमुद्धव ॥ २७ ॥ सहस्रशक्रपातांतंधर्मस्तेपेचयत्तपः ॥ तदाबभूवसाक्षीसधार्मिणांसर्वक
र्मिणां ॥ २८ ॥ शास्ताचफलदाताचयत्प्रसादान्नृणामिह ॥ सर्वेशमीदृशमहोद्रक्ष्याम्यद्यतमुद्धव ॥ २९ ॥ अष्टाविंश
तिरिंद्राणांपतनेयद्दिवानिशं ॥ एवंक्रमेणमासाब्दैःशताब्दंब्रह्मणोवयः ॥ ३० ॥ अहोयस्यनिमेषेणब्रह्मणःपतनंभवेत्
ईदृशंपरमात्मानंद्रक्ष्याम्यद्यतमुद्धव॥ ३१॥ नास्तिभूरजसांसंख्यायथैवब्रह्मणांतथा॥तथैवब्रंधोविश्वानांतदाधारोमहावि
राट्॥३२॥ विश्वेविश्वेचप्रत्येकंब्रह्मविष्णुशिवादयः॥मुनयोमनवःसिद्धामानवाद्याश्चराचराः ॥३३॥ यत्षोडशांशःसविराट्सृ
ष्टोनष्टश्चलीलया ॥ ईदृशंसर्वशास्तारंद्रक्ष्याम्यद्यतमुद्धव ॥ ३४ ॥ इत्येवमुक्त्वाक्रूरश्चपुलकांचितविग्रहः ॥ मूर्च्छांप्रापसा
श्रुनेत्रादध्यौतच्चरणांबुजम् ॥ ३५ ॥ बभूवभक्तिपूर्णश्चस्मारंस्मारंपदांबुजं ॥ उद्धवश्चतमाश्लिष्यप्रशशंसपुनःपुनः ॥
सचशीघ्रंययौगेहमक्रूरोपिस्वमंदिरे ॥ ३६ ॥ ॥ इतिश्री० श्रीकृ० अक्रूरहर्षोत्कर्षकथनंनामपंचषष्टितमोऽध्यायः ॥६५॥

श्रीनारायणउवाच ॥ अथरासेसखीयुक्तोरासेरासेश्वरःस्वयं ॥ सचरेमेतयासार्द्धंमतीवरमणोत्सुकः ॥ १ ॥ सुखसंभोगमात्रेण ययौनिद्रांचराधिका ॥ दृष्ट्वास्वप्नंसमुत्थायदीनोवाचप्रियंदिने ॥ २ ॥ राधिकोवाच ॥ अहोस्वामिन्निहागच्छत्वांकरोमिस्ववक्षसि ॥ परिणामेविधातामेनजानेकिंकरिष्यति ॥ ३ ॥ इत्युक्त्वासामहाभागाप्रियंकृत्वास्ववक्षसि ॥ दुःस्वप्नंकथयामासत्हृदयेनविदूयता ॥ ४ ॥ राधिकोवाच ॥ रत्नसिंहासनेहंचरत्नछत्रंचबिभ्रती ॥ तदातपत्रंजग्राहरुष्टोविप्रश्चमेप्रभो ॥ ५ ॥ सागरेकज्जलाकारेमहाघोरेचदुस्तरे ॥ गभीरेप्रेरयामासमामेवदुर्बलांसच ॥ ६ ॥ तत्रस्रोतसिशोकार्ताभ्रमामिचमुहुर्मुहुः ॥ महोर्मीणांचवेगेनव्याकुलानक्रसंकुलैः ॥ ७ ॥ त्राहित्राहीतिहेनाथत्वांवदामिपुनःपुनः ॥ त्वांनदृष्ट्वामहाभीताकरोमिप्रार्थनांसुरम् ॥ ८ ॥ कृष्णतत्रनिमज्जंतीपश्यामिचंद्रमंडलं ॥ निपतंतंचगगनाच्छतखंडंचभूतले ॥ ९ ॥ क्षणांतरेचपश्यामिगगनात्सूर्यमंडलं ॥ बभूवचचतुःखंडंनिपत्यधरणीतले ॥ १० ॥ एककालेचगगनेमंडलंचंद्रसूर्ययोः ॥ अतीवकज्जलाकारंसर्वंग्रस्तंचराहुणा ॥ ११ ॥ क्षणांतरेचपश्यामिब्राह्मणोदीप्तिमानिति ॥ मत्क्रोडस्थसुधाकुंभंबभंजचरुषेतिच ॥ १२ क्षणांतरेचपश्यामिमहारुष्टंचब्राह्मणम ॥ गृहीत्वाचव्रजंतंचरुषाचपरुषंमम ॥ १३ ॥ क्रीडाकमलदंडंचहस्ताद्धस्तंमम प्रभो ॥ सहसाखंडखंडंचबभूवसहहेतुना ॥ १४ ॥ हस्ताद्धस्तंचसहसासद्रत्नसारदर्पणः ॥ निर्मलःकज्जलाकारःखंडंखंडंबभूवह ॥ १५ ॥ हारोमेरत्नसाराणांछिन्नोभूत्वाचवक्षसः ॥ अतीवमलिनंपद्मंपपातधरणीतले ॥ १६ ॥ सौधपुत्तलिकाःसर्वान्नृत्यंतिचहसंतिच ॥ आस्फोटयंतिगायंतिरुदंतिचक्षणंक्षणं ॥ १७ ॥ कृष्णवर्णंबृहच्चक्रंखेभ्रमंतंमुहुर्मुहुः ॥ निपतंतंचोत्पतंतंपश्यामिचभयंकरं ॥ १८ ॥ प्राणाधिदेवःपुरुषोनिःसृत्याभ्यंतरान्मम ॥ राधेविदायंदेहीतिततोयामीत्युवाच ह ॥

॥ १९ ॥ कृष्णवर्णांचप्रतिमामामाश्लिष्यतिचुंबति ॥ कृष्णवस्त्रपरीधानाचेतिपश्यामिसांप्रतं ॥ २० ॥ इतीदंविपरीतंचदृ
ष्ट्वाचप्राणवल्लभ ॥ नृत्यंतिदक्षिणांगानिप्राणाआंदोलयंतिमे ॥ २१ ॥ रुदंतिशोकात्कर्षतिसमुद्विग्नंचमानसं ॥ किमिदं
किमिदंनाथवदवेदविदांवर ॥ २२ ॥ इत्युक्त्वाराधिकादेवीशुष्ककंठोष्ठतालुका ॥ पपाततत्पदांभोजेभीतासाशोकविह्व
ला ॥ २३ ॥ श्रुत्वास्वप्नंजगन्नाथोदेवींकृत्वास्ववक्षसि ॥ आध्यात्मिकेनयोगेनबोधयामासतत्क्षणं ॥ २४ ॥ तत्याजशो
कंसादेवीज्ञानंसंप्राप्यनिर्मलं ॥ शांतंचभगवंतंचकृत्वाकांतंस्ववक्षसि ॥ २५ ॥ ॥ इतिश्रीब्रह्म० महापु० श्रीकृष्णज०
श्रीराधाशोकापनोदनेषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ श्रीनारायणउवाच ॥ ॥ विरहव्याकुलांदृष्ट्वाकामिनींकाममो
हनः ॥ कृत्वावक्षसितांकृष्णोययौक्रीडासरोवरं ॥ १ ॥ राजराजेश्वरीराधाकृष्णवक्षसिराजते ॥ सौदामिनीवजलदेनवी
नेगगनेमुने ॥ २ ॥ रेमेसरमयासार्द्धंकृपयाचकृपानिधिः ॥ द्वयोर्द्वयोर्यथास्वर्णमण्योर्मारकतोमणिः ॥ ३ ॥ रत्ननिर्माण
पर्यंकेरत्नेंद्रसारनिर्मिते ॥ रत्नप्रदीपेज्वलतिरत्नभूषणभूषितः ॥ ४ ॥ रत्नभूषाभूषितयारासरत्नश्चकौतुकात् ॥ रसरत्ना
करेरम्येनिमग्नोरसिकेश्वरः ॥ ५ ॥ रासेरासेश्वरीराधारासेश्वरमुवाचसा ॥ सुरतौविरतौसत्यांविरतेनमनोरथे ॥ ६ ॥ ॥ रा
धिकोवाच ॥ प्रफुल्लाहंत्वयानाथम्लानाचत्वांविना ॥ यथामहौषधिगणःप्रभातेभातिभास्करे ॥७॥ नक्तंदीपशिखे
वाहंत्वयासार्द्धंत्वयाविना ॥ दिनेदिनेयथाक्षीणाकृष्णपक्षेविधोःकला ॥८॥ तव वक्षसिमेदीप्तिःपूर्णचंद्रप्रभासमा ॥ सद्योमृ
तात्वयात्यक्ताकुहांचंद्रकलायथा ॥ ९ ॥ ज्वलदग्निशिखेवाहंघृताहुत्यात्वयासह ॥ त्वयाविनाहंनिर्वाणाशिशिरेपद्मिनीय
था ॥१०॥ चिंताज्वरजराग्रस्तामतस्त्वयिगतेप्यहं ॥ अस्तंगतेरवौचंद्रेध्वांतग्रस्ताधरायथा ॥११॥ भ्रष्टोवेषस्त्वांविनामेरूपं

यौवनचेतनं ॥ तारावलीपरिभ्रष्टासूर्यसूतोदयेयथा ॥ १२ ॥ त्वमेवात्माचसर्वेषांममनाथोविशेषतः ॥ तनुर्यथात्मनात्यक्तातथा
हंचत्वयाविना ॥ १३ ॥ स्थलंयथाचित्रयुक्तंत्वयासार्द्धमहंतथा ॥ असंस्कृतात्वयाहीनातृणाछन्नायथामही ॥ १४ ॥ त्वयासा
र्द्धमहंकृष्णचित्रयुक्तेवमृन्मयी ॥ त्वांविनाजलधौताहंविरूपामृन्मयीवच ॥ १५ ॥ गोपांगनानांशोभाचत्वयारासेश्वरेणच ॥
हारेस्वर्णविकारेचश्वेतेनमणिनासह १६ व्रजराजत्वयासार्द्धंराजंतेराजराजयः ॥ यथाचंद्रेणनभसितारराजिर्विराजते
॥ १७ ॥ त्वयाशोभायशोदायानंदस्यनंदनंदन ॥ यथाशाखाफलस्कंधैस्तरुराजिर्विराजते १८ त्वयासार्द्धंगोकुलेशशोभा
गोकुलवासिनां ॥ यथासर्वालोकराजीराजेंद्रेणविराजते १९ रासस्यापिचरासेशत्वयाशोभामनोहरा ॥ राजतेदेवराजे
नयथास्वर्गैमरावती ॥ २० ॥ वृंदावनस्यवृक्षणांत्वंचशोभापतिर्गतिः ॥ अन्येषांचवनानांचबलवान्केसरीयथा ॥ २१ ॥
त्वयाविनायशोदाचनिमग्नाशोकसागरे ॥ अप्राप्यवत्संसुरभीक्रोशंतीव्याकुलायथा ॥ २२ ॥ आंदोलयंतिनंदस्यप्राणाद
ग्धंचमानसं ॥ त्वयाविनासप्तरात्रे यथाधान्यसमाहकः ॥ २३ ॥ इत्युक्त्वापरमप्रेम्णासापतंतीहरेःपदे ॥ पुनराध्यात्मिके
नैवबोधयामासतांविभुः ॥ २४ ॥ आध्यात्मिकोमहायोगोमोहसंच्छेदकारणं ॥ यथापरशुश्चवृक्षाणांतीक्ष्णधारश्चनारद ॥
॥ २५ ॥ ॥ नारदउवाच ॥ ॥ आध्यात्मिकंमहायोगंवदवेदविदांवर ॥ शोकच्छेदंचलोकानांश्रोतुंकौतूहलंमम ॥ २६ ॥
श्रीनारायणउवाच ॥ ॥ आध्यात्मिकोमहायोगोनज्ञातोयोगिनामपि ॥ सचनानाप्रकारश्चसर्ववेत्तिहरिःस्वयं ॥ २७ ॥
किंचिदाध्यात्मिकंचैवगोलोकेराधिकेश्वरः ॥ सुप्रीतःकथयामासत्रिपुरारिंमहामुने ॥ २८ ॥ सहस्रेंद्रनिपातांतंतपःकुर्वंत
मीश्वरं ॥ श्रेष्ठंज्येष्ठंवैष्णवानांवरिष्ठंचतपस्विनां ॥ २९ ॥ पुष्करेदुष्करंतप्त्वापाद्मेपाद्मंचपद्मजः ॥ दृष्ट्वातंसादरंकृत्वा

वाचकिंचिदेवतं ॥ ३० ॥ शतेंद्रपातपर्यंतकठोरेणकृशोदरं ॥ निश्चेष्टमस्थिसारंचकृपयाचकृपानिधिः॥ ३१ ॥ सिंहक्षेत्रेपु
राधर्ममत्तातंधर्मिणांवरं ॥ चतुर्दशेंद्रावच्छिन्नंतपस्तप्त्वाकृशोदरं ॥ ३२ ॥ पपाठाध्यात्मिकंकिंचित्कृपयाचकृपानिधिः॥
किंचिच्छतेंद्रावच्छिन्नमातपंतमुवाचसः ॥ ३३ ॥ किंचित्सनत्कुमारंचतपंतंसुचिरंचिरं ॥ सुतपंतमनंतंचकिंचिच्चोवाचनार
द ॥ ३४ ॥ चिरंतपंतंकपिलंहिमशैलेतपस्विनं ॥ पुष्करेभास्करेकिंचित्तपंतंदुष्करंतपः ॥३५ ॥ उवाचकिंचित्प्रन्हादंकिंचि
द्दुर्वाससंभृगुं ॥ एवंनिगूढभक्तंचकृपयाभक्तवत्सलः ॥ ३६ ॥ क्रीडासरोवरेरम्येयदुवाचकृपानिधिः ॥ शोकार्तांराधिकांतं
च्चकथयामिनिशामय ॥ ३७ ॥ विरसांरासिकांदृष्ट्वावासयित्वाचवक्षसि ॥ उवाचाध्यात्मिकंकिंचिद्योगिनींयोगिनांगुरुः
॥ ३८ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ जातिस्मरेस्मरात्मानंकथंविस्मरसिप्रिये ॥ सर्वंगोलोकवृत्तांतंसुदाम्नःशापमेवच ॥
॥ ३९ ॥ शापात्किंचिद्दिनंदीनेत्वद्विच्छेदोमयासह ॥ भविष्यातिमहाभागेमेलनंपुनरावयोः ॥४० ॥ पुनरेवगमिष्यामिगो
लोकंतंनिजालयं ॥ गत्वागोपांगनाभिश्चगोपैर्गोलोकवासिभिः ॥४१ ॥ अधुनाध्यात्मिकंकिंचित्त्वांवदामिनिशामय ॥ शो
कघ्नंहर्षदंसारंसुखदंमानसस्यच ४२ अहंसर्वांतरात्माचनिर्लिप्तःसर्वकर्मसु ॥ विद्यमानश्चसर्वेषुसर्वत्रादृष्टएवच ४३ वायु
श्चरतिसर्वत्रयथैवसर्ववस्तुषु ॥ नचलिप्तस्तथैवाहंसाक्षीचसर्वकर्मणां ॥४४॥ जीवोमत्प्रतिबिंबश्चसर्वसर्वत्रजीविषु ॥ भो
क्ताशुभाशुभानांचकर्ताचकर्मणांसदा ॥ ४५ ॥ यथाजलघटेष्वेवमंडलंचंद्रसूर्ययोः ॥ भग्नेषुतेषुसंश्लिष्टस्तयोरेवतथाम
यि ॥४६ ॥ जीवश्लिष्टस्तथाकालेमृतेषुजीविषुप्रिये ॥ आवांचविद्यमानौचसततंसर्वजंतुषु ॥ ४७ ॥ आधारश्चाहमाधेयं
कार्यंचकारणंविना ॥ अयेसर्वाणिद्रव्याणिनश्वराणिचसुंदरि ॥ ४८ ॥ आविर्भावाधिकाःकुत्रकुत्रचिन्नूनमेवच ॥ममां

शाःकेपिदेवाश्चकेचिद्देवाःकलास्तथा ॥ ४९ ॥ केचित्कलाःकलांशांशास्तदंशांशाश्चकेनच ॥ मदंशाप्रकृतिःसूक्ष्मासाचमू
र्त्याचपंचधा ॥ ५० ॥ सरस्वतीचकमलादुर्गात्वंचापिवेदसूः ॥ सर्वेदेवाःप्रकृतिकायावंतोमूर्तिधारिणः ॥५१॥ अहमात्मा
नित्यदेहीभक्तध्यानानुरोधतः ॥ येयेप्रकृतिकाराधेतेनष्टाःप्राकृतेलये ॥५२ ॥ अहमेवासमेवाग्रेपश्चादप्यहमेवच ॥ यथा
हंचतथात्वंचयथाधावल्यदुग्धयोः ॥ ५३ ॥ भेदःकदापिनभवेन्निश्चितंचतयावयोः ॥ अहंमहान्विराट्सृष्टौविश्वानिय
स्यलोमसु ॥ ५४ ॥ अंशस्त्वंतत्रमहतीस्वांशेनतस्यकामिनी ॥ अहंक्षुद्रविराट्सृष्टौविश्वंयन्नाभिपद्मतः ॥ ५५ ॥ अयं
विष्णोर्लोमकूपेवासोमेचांशतःसति ॥ तस्यस्त्रीत्वंचबृहतीस्वांशेनसुभगातथा ॥ ५६ ॥ तस्याविश्वेचप्रत्येकंब्रह्मवि
ष्णुशिवादयः ॥ ब्रह्मविष्णुशिवाअंशाश्चान्याश्चापिचमत्कलाः ॥ ५७ ॥ मत्कलांशांशकलयासर्वेदेविचराचराः ॥ वैकुं
ठेत्वंमहालक्ष्मीरहंतत्रचतुर्भुजः ॥ ५८ ॥ सचविश्वाद्बहिश्चार्द्धयथागोलोकएवच ॥ सरस्वतीत्वंसत्येचसावित्रीब्रह्म
णःप्रिया ॥५९॥ शिवलोकेशिवात्वंचमूलप्रकृतिरीश्वरी ॥ विनश्यदुर्गंदुर्गांचसर्वदुर्गातिनाशिनी ॥ ६० ॥ साएवदक्षकन्या
चसाएवशैलकन्यका ॥ कैलासेपार्वतीतेनसौभाग्याशिववक्षसि ६१ स्वांशेनत्वंसिंधुकन्याक्षीरोदेविष्णुवक्षसि ॥ अहंस्वां
शेनसृष्टौचब्रह्मविष्णुमहेश्वराः ६२ त्वंचलक्ष्मीःशिवाधात्रीसावित्रीचपृथक्पृथक् ॥ गोलोकेचस्वयंराधारासेरासेश्वरीस
दा ॥ ६३ ॥ वृंदावृंदावनेरम्येविरजाविरजातटे ॥ सात्वंसुदामशापेनभारतंपुण्यमागता ॥ ६४ ॥ पूतंकर्तुंभारतंचवृंदारण्यं
चसुंदरि ॥ त्वत्कलांशांशकलयाविश्वेषुसर्वयोषितः ॥६५॥ यायोषित्साचभवतीयःपुमान्सोहमेवच ॥ अहंचकलयावन्हिस्त्वं
स्वाहादाहिकाप्रिया ॥ ६६ ॥ त्वयासहसमर्थोहंनालंदग्धुंचत्वांविना ॥ अहंदीप्तिमतांसूर्यःकलयात्वंप्रभाकरी ॥ ६७ ॥ संज्ञा

त्वंचत्वयाभास्मित्वाविनाहंनदीप्तमान् ॥ अहंचकलयाचंद्रस्त्वंचशोभाचरोहिणी ॥ ६८ ॥ मनोहरस्त्वयासार्द्धंत्वांविना नचसुंदरः ॥ अहमिंद्रश्चकलयासर्वलक्ष्मीश्चत्वंशची ॥६९॥ त्वयासार्द्धंदेवराजोहतश्रीश्चत्वयाविना ॥ अहंधर्मश्चकलयात्वं चमूर्तिश्चधर्मिणी ॥ ७० ॥ नाहंशक्तोधर्मकृत्येत्वांचधर्मक्रियांविना ॥ अहंयज्ञश्चकलयात्वंस्वाहांशेनदक्षिणा ॥ ७१ ॥ त्वया सार्द्धंचफलदोप्यसमर्थस्त्वयाविना ॥ कलयापितृलोकोहंस्वांशेनत्वंस्वधासती ॥ ७२ ॥ त्वयालंकव्यदानेचसदानालंत्व याविना ॥ अहंपुमांस्त्वंप्रकृतिर्नस्रष्टाहंत्वयाविना ॥ ७३ ॥ त्वंचसंपत्स्वरूपाहमीश्वरश्चत्वयासह ॥ लक्ष्मीयुक्तस्त्वयाल क्ष्म्यानिःश्रीकश्चत्वयाविना ७४ यथानालंकुलालश्चघटंकर्तुंमृदाविना ॥ अहंशेषश्चकलयास्वांशेनत्वंवसुंधरा ॥७५॥ त्वां सस्यरत्नाधारांचबिभर्मिमूर्ध्निसुंदरि ॥ त्वंचकांतिश्चशांतिश्चभूतिर्मूर्तिमतीसती ॥७६ ॥ तुष्टिःपुष्टिःक्षमालज्जाक्षुधातृष्णाप रादया ॥ निद्राशुद्धाचतंद्राचमूर्छाचसन्नतिःक्रिया ॥ ७७॥ मूर्तिरूपाभक्तिरूपादेहिनांदेहरूपिणी ॥ ममाधारासदात्वंचतवा त्माहंपरस्परं ॥ ७८ ॥ यथात्वंचतथाहंचसमौप्रकृतिपूरुषौ ॥ नहिसृष्टिर्भवेद्देविद्वयोरेकतरंविना ॥ ७९ ॥ इत्युक्त्वापरमा त्माचराधांप्राणाधिकांप्रियां ॥ कृत्वावक्षसिसुप्रीतोबोधयामासनारद ॥ ८० ॥ सचक्रीडानियुक्तश्चबभूवरत्नमंदिरे ॥ त याचराधयासार्द्धंकामुक्यासहकामुकः ॥ ८१ ॥ इतिश्रीब्र० महापु० श्रीकृष्णजन्मखंडेआध्यात्मिकयोगकथनंनामसप्त षष्टितमोध्यायः ॥ ६७ ॥ ॥ श्रीनारायणउवाच ॥ ॥ कृत्वाक्रीडांसमुत्थायपुष्पतल्पात्पुरातनः ॥ निद्रितांप्राणसह शींबोधयामासतत्क्षणं ॥ १ ॥ वस्त्रांचलेनसंस्कृत्यकृत्वातान्निर्मलंमुखं ॥ उवाचमधुरंशांतंशांतांचमधुसूदनः ॥ २ ॥ श्रीकृ ष्णउवाच ॥ अयितिष्ठक्षणंरासेरासेश्वरिशुचिस्मिते ॥ व्रजवृंदावनंवापिव्रजंव्रजव्रजेश्वरि ॥ ३ ॥ रासाधिष्ठातृदेवित्वंरासं

रासेकुरुक्षणं॥ग्रामेग्रामेयथासंत:सर्वत्रग्रामदेवता: ॥ ४ ॥ प्रियालिनिवहै:सार्द्धंक्षणंचंदनकाननं ॥ क्षणंवाचंपकवनंगच्छ
वातिष्ठसुंदरि ॥ ५ ॥ क्षणंगृहंचयास्यामिविशिष्टंकार्यमास्तिमे ॥ विरामंदेहिमेप्रीत्याक्षणंमांप्राणवल्लभे ॥ ६ ॥ प्राणाधि
ष्ठातृदेवित्वंप्राणाश्चत्वयिसंतिमे ॥ प्राणीविहायप्राणांश्चकुत्रस्थातुंक्षम:प्रिये ॥७॥ त्वयिमेमानसंशश्वत्त्वंमेसंसारवासना॥
त्वत्तोममप्रियानास्तित्वमेवशंकरात्प्रिया ॥ ८ ॥ प्राणामेशंकर:सत्यंत्वंचप्राणाधिकासति ॥ इत्युक्त्वातांसमाश्लिष्यभ
गवान्गंतुमुद्यत: ॥ ९ ॥ अक्रूरागमनंज्ञात्वासर्वज्ञ:सर्वसाधन: ॥ आत्मापाताचसर्वेषांसर्वोपकारकारक: ॥ १० ॥ दृष्ट्वात
मेवगच्छंतमुत्सुकंभिन्नमानसं ॥ उवाचराधिकादेवीत्हृदयेनविदूयता ॥ ११ ॥ ॥ राधिकोवाच ॥ ॥ हेनाथरमणश्रेष्ठश्रे
ष्ठश्चप्रेयसांमम ॥ हेकृष्णहेरमानाथव्रजेशमाव्रजव्रज ॥ १२ ॥ अधुनात्वंप्राणनाथपश्यामिभिन्नमानसं ॥ गतेत्वयिममप्रे
मगतंसौभाग्यमेवच ॥ १३ ॥ कयासिमांविनिक्षिप्यगंभीरेशोकसागरे ॥ विरहव्याकुलांदीनांत्वय्येवशरणागताम् १४
नयास्यामिपुनर्गेहंयास्यामिकाननांतरं ॥ कृष्णकृष्णेतिकृष्णेतिगायंगायंदिवानिशं ॥ १५ ॥ नयास्याम्यथवारण्यंया
स्यामिकामसागरे ॥ तत्रत्वत्कामनांकृत्वात्यक्ष्यामिचकलेवरं ॥ १६ ॥ यथाकाशोयथात्माचयथाचंद्रोयथारवि: ॥ तथा
त्वंयासिमत्पार्श्वैनिबद्धोवसनांचले ॥ १७ ॥ अधुनायासिनैराश्यंकृत्वामेदीनवत्सल ॥ नयुक्तंहिपरित्यक्तुंदीनांमांशरणा
गताम् ॥ १८ ॥ यत्पादपद्मंध्यायंतेब्रह्मविष्णुशिवादय: ॥ त्वांमाययागोपवेषंकथंजानामिमत्सरी ॥ १९ ॥ कृतंयद्देवदु
र्नीतमपराधसहस्रकं ॥ यदुक्तंपतिभावेनचाभिमानेनतत्क्षम ॥ २० ॥ चूर्णीभूतश्चमद्गर्वोदूरीभूतोमनोरथ: ॥ विज्ञातमात्म
सौभाग्यंकिमन्यत्कथयामिते ॥ २१ ॥ज्ञात्वागर्गमुखाच्छुत्वामोहितातवमायया ॥ त्वांचवक्तुंनशक्नोमिप्रेम्णावाभक्तिपा

शतः ॥ २२ ॥ यासिचन्मापारत्यज्यसकलकोभविष्यसि ॥ त्वत्पुत्रपौत्रानश्यंतिब्रह्मकोपानलेनच ॥ २३ ॥ क्षणंयुगशतंम
न्येत्वांविनाप्राणवल्लभं ॥ कथंशताब्दंत्वांत्यक्त्वाविभर्मिजीवनंप्रभो ॥ २४ ॥ इत्युक्त्वाराधिकाकोपात्पपातधरणीतले ॥
मूर्छासंप्रापसहसाजहारचेतनांमुने ॥ २५ ॥ कृष्णरतांमूर्च्छितांदृष्ट्वाकृपयाचकृपानिधिः ॥ चेतनांकारयित्वाचवासयामास
वक्षसि ॥ २६ ॥ बोधयामासविविधंयोगैःशोकविखंडनैः ॥ तथापिशोकंत्यक्तुंचनशशाकशुचिस्मिता ॥ २७ ॥ सामान्यवस्तुवि
श्लेषोनृणांशोकायकेवलं ॥ देहात्मनोश्चविच्छेदःकसुखायप्रकल्पते ॥ २८ ॥ नययौतत्रदिवसेव्रजराजोव्रजंप्रति ॥ क्री
डासरोवराभ्याशंप्रययौराधयासह ॥ २९ ॥ तत्रगत्वापुनःक्रीडांचकारचतयासह ॥ विजहौविरहज्वालांरासेरासेश्वरीमुदा
॥ ३० ॥ राधासास्वामिनासार्द्धंपुष्पचंदनचर्चिता ॥ पुष्पचंदनतल्पेचतस्थौरहसिनारद ॥ ३१ ॥ ॥ इतिश्रीब्र० म० श्रीकृ
ष्णज० शोकविमोचनंनामअष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ नारदउवाच ॥ ॥ अतःपरंकिंरहस्यंराधाकेशवयोर्वद ॥
निगूढतत्त्वमस्पष्टंतन्मेव्याख्यातुमर्हसि ॥ १ ॥ श्रीनारायणउ० ॥ शृणुनारदवक्ष्यामिरहस्यंपरमाद्भुतं ॥ गोपनीयंचवेदे
षुपुराणेषुपुराविदां ॥ २ ॥ पुनःसकामोभगवान्कृष्णःस्वेच्छामयोविभुः ॥ रेमेसरमयासार्द्धंविदग्धश्चविदग्धया ॥ ३ ॥ चतुः
षष्टिकलाशक्त्यायथाकांताकलावती ॥ कामशास्त्रेषुनिपुणाविदग्धारसिकेश्वरी ॥ ४ ॥ शृंगारलीलानिपुणाशश्वत्कामा
चकामुकी ॥ सुंदरीसुदरीष्वेवशश्वत्सुस्थिरयौवना ॥ ५ ॥ पितॄणांमानसीकन्याधन्यामान्याचमानिनी ॥ शंभोःशिष्याज्ञा
नयुताशतकल्पांतजीविनी ॥ ६ ॥ वेदवेदांगनिपुणायोगनीतिविशारदा ॥ नानारूपधरासाध्वीप्रसिद्धासिद्धयोगिनी ॥ ७ ॥
तत्कन्याराधिकादेवीमातृतुल्याचकामुकी ॥ चकारनानाभावंसासुशीलास्वामिनंप्रति ॥ ८ ॥ चतुःषष्टिकलामानंशृंगारंच

चकारसः ॥ तथाविशिष्टयासाकंरासेरासरसोत्सुकः ॥ ९ ॥ तांनखाग्रक्षतश्रोणींनखक्षतपयोधरां ॥ लुप्तचंदनसिंदूरांकबरी
शिथिलांसतीं ॥ १० ॥ सुखसंभोगमग्नांचनम्रांचशोकमूर्च्छितां ॥ पुलकांचितसर्वांगींनिद्रादेवींसमाययौ ॥ ११ ॥ दृष्ट्वातांनि
द्रितांकृष्णःकृपयाचकृपानिधिः ॥ रुरोदमाययामायीमायेशोलोकशिक्षया ॥ १२ ॥ कृत्वावक्षसिराधांचचुचुंबचपुनःपुनः
॥ स्नातांचनेत्रसलिलैःप्राणाधिष्ठातृदेवतां ॥ १३ ॥ प्राणाधिकांप्रियतमांधारयामासवाससी ॥ वन्हिशुद्धेतिसुक्ष्मेचामू
ल्येविश्वसुदुर्लभे ॥ १४ ॥ कबरींरचयामासददौकुंकुमचंदनं ॥ तद्गात्रेचगलेहारममूल्यंरत्ननिर्मितं ॥ १५ ॥ सिंदूरंचददौ
तस्याःसीमंताधःस्थलेमले ॥ दाडिंबकुसुमाकारंयुक्तंचंदनबिंदुभिः ॥ १६ ॥ चकारपद्मकंगंडेनानाचित्रविचित्रकं ॥ ददौ
तत्पादपद्मेचरत्नमंजीररंजितं ॥ १७ ॥ पादांगुलिनखाग्रेचसुंदरालक्तकंददौ ॥ नानासुवेषोज्वलितांतांनिद्राकुलितांविभुः
॥ १८ ॥ पुनश्चकारमोहेनगाढालिंगनमीप्सितं ॥ पुनश्चचुंबनंकृत्वानिवेश्यचस्ववक्षसि ॥ १९ ॥ सुष्वापजगतांस्वामी
कामीविरहकातरः ॥ एतस्मिन्नंतरेकालेब्रह्मालोकपितामहः ॥ २० ॥ शिवशेषादिभिर्देवैर्मुनींद्रैस्सार्द्धमाययौ ॥ आगत्य
नत्वाशिरसातुष्टावसंपुटांजलिः ॥ २१ ॥ सामवेदोक्तस्तोत्रेणपरिपुर्णतमंविभुं ॥ २२ ॥ ब्रह्मोवाच ॥ जयजयजगदीशवं
दितचरणनिर्गुणनिराकारस्वेच्छामयभक्तानुग्रहनित्यविग्रहगोपवेषमाययामायेशसुवेषसुशीलशांतसर्वकांतदांतनितां
तज्ञानानंदपरात्परतरप्रकृतेःपरसर्वांतरात्मरूपनिर्लिप्तसाक्षिस्वरूपव्यक्ताव्यक्तनिरंजनभारावतारणकरुणार्णवशोकसं
तापग्रसनजरामृत्युभयादिहरणशरणपंजरभक्तानुग्रहकातरभक्तवत्सलभक्तसंचितधनओंनमोस्तुते ॥ २३ ॥ सर्वाधिष्ठा
तृदेवायेत्युक्त्वावैप्रीणनायच ॥ पनःपनरुवाचेदंमूर्च्छितश्चबभूवह २४ इतिब्रह्मकृतंस्तोत्रंयःश्रृणोतिसमाहितः ॥ तत्सर्वा

भीष्टसिद्धिश्चभवत्येवनसंशयः ॥ २५ ॥ अपुत्रोलभतेपुत्रंप्रियाहीनोलभेत्प्रियाम् ॥ निर्धनोलभतेसत्यंपरिपूर्णतमंधनं ॥
॥ २६ ॥ इहलोकेसुखंभुक्त्काचांतेदास्यंलभेद्धरेः ॥ अचलांभक्तिमाप्नोतिमुक्तेरपिसुदुर्लभाम् ॥ २७ ॥ स्तुत्वाचजगतां
धाताप्रणम्यचपुनःपुनः ॥ शनैःशनैःसमुत्थायभक्त्यापुनरुवाचह ॥ २८ ॥ ॥ ब्रह्मोवाच ॥ ॥ उत्तिष्ठदेवदेवेशपरमा
नंदकारण ॥ नंदनंदनसानंदनित्यानंदनमोस्तुते ॥ २९ ॥ व्रजनंदालयंनाथत्यजवृंदावनंवनं ॥ स्मरसुदामशापंचशतव
र्षनिबंधनं ॥ ३० ॥ भक्तशापानुरोधेनशतवर्षंप्रियांत्यज ॥ पुनरेतांचसंप्राप्यगोलोकंचगमिष्यसि ॥ ३१ ॥ गत्वापितृगृ
हंदेवपश्याक्रूरंसमागतं ॥ पितृव्यमतिथिंमान्यंधन्यंवैष्णवमीश्वरं ॥ ३२ ॥ तेनसार्द्धंमधुपुरींभगवन्गच्छसांप्रतम् ॥
कुरुशंभोर्धनुर्भंगंभग्नंवैरिगणंहरे ॥ ३३ ॥ हनकंसंदुरात्मानंतातंबोधयमातरं ॥ निर्माणंद्वारकायाश्चभारावतरणंभु
वः ॥ ३४ ॥ दहवाराणसींशंभोःशक्रस्यसदनंविभो ॥ शिवस्यजृंभणंयुद्धेबाणस्यभुजकृंतनं ॥ ३५ ॥ रुक्मिणी
हरणंनाथघातनंनरकस्यच ॥ षोडशानांसहस्रंचस्त्रीणांपाणिग्रहंकुरु ॥ ३६ ॥ त्यजप्रियांप्राणसमांव्रजेश्वरव्रजंव्र
ज ॥ उत्तिष्ठोत्तिष्ठभद्रंतेयावद्राधानजाग्रति ॥ ३७ ॥ इत्येवमुक्त्काब्रह्माचसेंद्रैर्देवगणैःसह ॥ जगामब्रह्मलोकंचशे
षश्चशंकरस्तथा ॥ ३८ ॥ पुष्पचंदनवृष्टिंचकृष्णस्योपरिदेवताः ॥ चक्रुःप्रीत्याचभक्त्याचवाग्बभूवाशरीरिणी ॥
॥ ३९ ॥ वधकंसंवधार्हंचस्वपित्रोर्मोक्षणंकुरु ॥ क्षयंकुरुभुवोभारंनारदेत्येवमेवच ॥ ४० ॥ इत्येवतद्वचःश्रुत्वा
भगवान्भूतभावनः ॥ राधांभगवतींत्यक्त्वासमुत्तस्थौशनैःशनैः ॥ ४१ ॥ ययौहरिःकियद्दूरंनिरीक्ष्यचपुनःपुनः ॥
क्षणंतस्थौचंदनानांवनेवाससमीपतः ॥ ४२ ॥ विहायराधानिद्रांसासमुत्तस्थौस्वतल्पतः ॥ ननिरीक्ष्यहरिंशांतंकांतंच

प्राणवल्लभं ॥ ४३ ॥ हानाथरमणप्रेष्ठप्राणेशप्राणवल्लभ ॥ प्राणचोरप्रियतमक्कगतोसीत्युवाचह ॥ ४४ ॥ क्षणमन्वेषणं
कृत्वाचभ्रामममालतीवनं ॥ उवासक्षणमुत्तस्थौक्षणंसुष्वापभूतले ॥ ४५ ॥ रुरोदक्षणमत्युच्चैर्विललापमुहुर्मुहुः ॥ आग
च्छागच्छहेनाथेत्येवमुक्त्वापुनःपुनः ॥ ४६ ॥ मूर्च्छांसंप्रापसंतापात्संतप्ताविरहानलैः ॥ भूतलेचतृणाच्छन्नेपपातचयथा
मृता ॥ ४७ ॥ आययुस्तत्रगोप्यश्चब्रह्मन्शतसहस्रशः ॥ काश्चिच्चामरहस्ताश्चगृहीत्वाचंदनद्रवं ॥ ४८ ॥ तासांमध्येप्रि
यालीलाःकृत्वाराधांस्ववक्षसि ॥ मृतामिवप्रियांदृष्ट्वारुरोदप्रेमविह्वला ॥ ४९ ॥ सजलंपंकजदलंपंकोपरिनिधायच ॥
स्थापयामासतांराधांनिश्चेष्टांचमृतामिव ॥ ५० ॥ गोपीभिःसेवितांतत्ररुचिरैःश्वेतचामरैः ॥ चंदनद्रवयुक्तांचास्निग्धवस्त्रा
न्वितांसतीं ॥ ५१ ॥ ददर्शकृष्णस्तत्रेत्यतामेवप्राणवल्लभाम् ॥ निवारितश्चगोपीभिर्बलिष्ठाभिश्चनारद ॥ ५२ ॥ यथानी
तःसापराधोदंड्योराजभयादिभिः ॥ चकारराधांक्रोडेचसमागत्यकृपानिधिः ॥ ५३ ॥ चेतनांकारयामासबोधयामास
बोधनैः ॥ संप्राप्यचेतनांदेवीददर्शप्राणवल्लभं ॥ ५४ ॥ बभूवसुस्थिरादेवीतत्त्याजविरहज्वरं ॥ चकारकांतंसाकांतागात्रा
लिंगनमीप्सितं ॥ ५५ ॥ नानाप्रकारश्रृंगारंचकारमधुसूदनः ॥ उवासरत्नतल्पेचराधांकृत्वास्ववक्षसि ॥ ५६ ॥ राधास
खीरत्नमालाविदग्धासर्वपूजिता ॥ उवाचकृष्णंमधुरंनीतिसारमनुत्तमं ॥ ५७ ॥ ॥ रत्नमालोवाच ॥ ॥ शृणुकृ
ष्णप्रवक्ष्यामिपरिणामसुखावहं ॥ हितंतथ्यंनीतिसारंदंपत्योःप्रीतिकारणं ॥ ५८ ॥ संमतंकामशास्त्रेषुनीतौवेदपुराणयोः
लौकिकव्यवहारेषुप्रशस्यंसुयशस्करं ॥ ५९ ॥ नारीणांचयथामाताप्रियोभ्राताचबंधुषु ॥ ततःप्रियश्चपुत्रश्चपुत्रादेवप्रि
यःपतिः ॥ ६० ॥ शतपुत्रात्प्रियःस्वामीसाध्वीनांसाधुसंमतः ॥ रसिकानांविदग्धानांनहिभर्तुःपरःप्रियः ॥ ६१ ॥ यदिभ

र्तोविदग्धश्चविदग्धानांसुखावहः ॥ अन्यथाविषतुल्यश्चविषमश्चेत्खलःखलु ॥ ६२ ॥ संसारेचानृतेवत्सदंपत्योःप्रीतिरेव
च ॥ परस्परंचसमताप्रेमसौभाग्यमीप्सितं ॥ ६३ ॥ दंपत्योःसमतानास्तियत्रयत्रहिमंदिरे ॥ अलक्ष्मीस्तत्रतत्रैवविफलं
जीवनंतयोः ॥ ६४ ॥ सुस्वामिनांविभेदश्चपरंदुःखंचयोषितां ॥ शोकसंतापबीजंचजीवितंमरणाधिकं ॥ ६५ ॥ स्वप्नेजा
गरणेचापिपतिःप्राणाश्चयोषितः ॥ पतिरेवगुरुस्त्रीणामिहलोकेपरत्रच ॥ ६६ ॥ अस्मात्त्वयिगतेनाथेमूर्छांसंप्रापराधि
का ॥ पपातसहसाभूमौतृणाच्छन्नेचभूतले ॥ ६७ ॥ मयादत्तंमुखेस्याश्चशीतलंजलमुत्तमं ॥ तदाश्वासोबभूवास्याश्चेत
नंबाल्यमेवच ॥ ६८ ॥ क्षणंवदतिहेनाथहेकृष्णेतिक्षणंसखी ॥ क्षणंरोदितिसंतप्तामूर्छांप्राप्नोतितत्क्षणं ॥ ६९ ॥ राधिका
याःशरीरंचसंतप्तंविरहानलैः ॥ दग्धलोहयष्टिसममस्पृश्यमनलोपमं ॥ ७० ॥ स्वप्नेजागरणेरात्रौदिवासुचगृहेवने ॥ ज
लेस्थलेचांतरिक्षेभ्युदयेचंद्रसूर्ययोः ॥ ७१ ॥ नास्तिभेदश्चराधायामृततुल्याजडाकृतिः ॥ शश्वत्पश्यतिस्थानस्थासर्वंवि
ष्णुमयंजगत् ॥ ७२ ॥ स्निग्धपंकेपंकजानांसजलानिदलानिच ॥ निपत्यतत्कृतेतल्पेसुष्वापविरहातुरा ॥ ७३ ॥ सेविता
साप्रियालीभिःसंततंश्वेतचामरैः ॥ चंदनद्रवसंसिक्तास्निग्धवस्त्रसमन्विता ॥ ७४ ॥ राधांगस्पर्शमात्रेणपंकःसंप्रापशुष्क
तां ॥ स्निग्धानिपद्मपत्राणिबभूवुर्भस्मसात्क्षणं ॥ ७५ ॥ चंदनंशुष्कतांप्रापवर्णश्चंपकसन्निभः ॥ बभूवकज्जलाकारः
केशस्यवर्णतोहरे ॥ ७६ ॥ सिंदूरबिंदूरुचिरःश्यामतांप्रापतत्क्षणं ॥ वेषोविलासोलीलाचक्रीडात्यक्ताबभूवह ॥ ७७ ॥ रत्न
मालातुतांदृष्ट्वागत्वाकृष्णांतिकंतदा ॥ उवाचमधुरंवाक्यंराधाहितकरंपरं ॥ ७८ ॥ रत्नमालोवाच ॥ हेकृष्णकमलाकां
तत्वद्वियोगेनमत्सखी ॥ प्राणांस्त्यक्ष्यतिशीघ्रंसायदिनायास्यसिध्रुवं ॥ ७९ ॥ विचार्यमनसाकृष्णयत्तत्समुचितंकुरु ॥

नभवेत्कामिनीहत्यायेननीतिविशारद॥८०॥रत्नमालावचःश्रुत्वाप्रहस्योवाचमाधवः॥ हितंसत्यंनीतिसारंपरिणामसु
खावहं॥८१॥श्रीभगवानु०॥ईशोयद्यपिशक्तोहंनिषेधंखंडितुंप्रिये॥ तथापिनक्षमोरत्नेनियतेर्नकरोम्यहं॥८२॥ब्रह्मांडे
षुचसर्वेषुमर्यादास्थापितामया॥ तयाकर्मप्रकुर्वंतिमुनयश्चसुरानराः॥८३॥ सुदामशापाद्विच्छेदःशतवर्षमनीप्सितः॥भवि
ष्यत्येवदंपत्योरावयोरेवसुंदरि॥८४॥ भेदोजागरणेस्याश्चमयासहसुमध्यमे॥ संश्लेषःसंततंस्वप्नेमद्वरेणभविष्यति ८५
आध्यात्मिकीमयादत्ताशोकच्छेदोभविष्यति॥ राधांबोधयभद्रंतेयास्यामिनंदमंदिरं॥८६॥इत्युक्त्वाजगतांनाथोययौनंदा
लयंप्रति॥ राधिकांबोधयामासुरालिसंघाश्चनारद॥८७॥ गत्वागृहंचपितरंननाममातरंतथा॥ चकारमाताक्रोडेचनवनी
तंचनूतनं॥८८॥ मातृदत्तंचतांबूलंचखादशीतलंजलं॥ उवासतत्रजगतांनाथोमातृसमीपतः॥८९॥ सर्वैर्गोपसमूहैश्चसे
वितःश्वेतचामरैः॥ माल्यचंदनतांबूलंतेचतस्मैददुर्मुदा॥९०॥ ॥इतिश्रीब्र०म० श्रीकृ०ज० श्रीकृष्णागमनंनामोन
सप्ततितमोऽध्यायः॥६९॥ ॥श्रीनारायणउवाच॥ ॥यथाक्रूरःस्वशरणंगत्वाकंसेनप्रेषितः॥ चकारशयनंतल्पेभु
क्त्वामिष्टान्नमुत्तमं॥१॥ सकर्पूरंचतांबूलंचखादवासितंजलं॥ जगामनिद्रांसुखतःसुखसंभोगमात्रतः॥२॥ ततोदद
र्शसुस्वप्नंपुराणश्रुतिसंमितं॥ निशावशेषसमयेवाद्यादिपरिवर्जिते॥३॥ अरोगीबद्धकेशश्चवस्त्रयुग्मसमन्वितः॥ सुत
ल्पशायीसुस्निग्धश्चिंताशोकविवर्जितः॥४॥ किशोरवयसंश्यामंद्विभुजंमुरलीधरं॥ पीतवस्त्रपरीधानंवनमालाविभूषितं
॥५॥ चंदनोक्षितसर्वांगंमालतीमालशोभितं॥ भूषितंभूषणार्हंचसद्रत्नमणिभूषणैः॥६॥ मयूरपिच्छचूडंचसस्मितंपद्म
लोचनं॥ एवंभूतंद्विजशिशुंददर्शप्रथमंमुने॥७॥ ततोददर्शरुचिरांपतिपुत्रवतींसतीं॥ पीतवस्त्रपरीधानांरत्नभूषणभूषितां

॥ ८ ॥ ज्वलत्प्रदीपहस्तांचशुक्लधान्यकरांवरां ॥ शरच्चंद्रनिभास्यांचसस्मितांवरदांशुभां ॥ ९ ॥ ततोददर्शविप्रंचप्रकुर्वंतं
शुभाशिषं ॥ श्वेतपद्मंगतंहंसंतुरगंचसरोवरं ॥ १० ॥ ददर्शचित्रितंचारुफलितंपुष्पितंशुभं ॥ आम्रनिंबनारिकेलगुर्वार्कक
दलीतरुं ॥ ११ ॥ दर्शतंश्वेतसर्पंचस्वात्मानंपर्वतस्थितं ॥ वृक्षस्थंचगजस्थंचतरिस्थंतुरगस्थितं ॥ १२ ॥ वीणांबादितवंतं
चभुक्तवंतंचपायसं ॥ दधिक्षीरयुतान्नंचपद्मपत्रस्थमीप्सितं १३ कृमिविट्सहितांगंचरुदंतंमोहितंतदा ॥ शुक्लधान्यंपुष्पक
रंक्षणंचंदनचर्चितं ॥ १४ ॥ प्रासादस्थंसमुद्रस्थमात्मानंचसलोहितं ॥ छिन्नभिन्नक्षतांगंचमेदपूयसमन्वितं ॥ १५ ॥ ततो
ददर्शरजतंमणिंशुभ्रंचकांचनं ॥ मुक्तामाणिक्यरत्नंचपूर्णकुंभजलंशुभं ॥ १६ ॥ सुरभिंचसवत्सांचवृषभेंद्रंमयूरकं ॥ शुकं
चसारसंहंसंचिल्लंखंजनमेवच ॥ १७ ॥ तांबूलंपुष्पमाल्यंचज्वलदग्निंसुरार्चनं ॥ पार्वतीप्रतिमांकृष्णप्रतिमांशिवलिंगकं
॥ १८ ॥ विप्रबालांचबालांचसुपक्कफलितांकृषिं ॥ देवस्थलींचराजेंद्रंसिंहंव्याघ्रंगुरुंसुरं ॥ १९ ॥ दृष्ट्वास्वप्नंसमुत्तस्थौचका
रान्हिकमीप्सितं ॥ उद्धवंकथयामाससर्ववृत्तांतमेवच ॥ २० ॥ उद्धवाज्ञांसमादायकृत्वागुरुसुरार्चनं ॥ यात्रांचकारश्रीकृष्णं
ध्यात्वामनसिनारद ॥ २१ ॥ ददर्शवर्त्मन्येवंचमंगलार्हंशुभप्रदं ॥ वांछाफलप्रदंरम्यंपुरोमंगलसूचकं ॥ २२ ॥ वामेशिवांशि
वांपूर्णनकुलंचाषसुंदरं ॥ पतिपुत्रवतींसाध्वींदिव्याभरणभूषितां ॥ २३ ॥ शुक्लपुष्पंचमाल्यंचधान्यंचखंजनंशुभं ॥ दक्षिणे
ज्वलदग्निंचविप्रंतंवृषभंगजं ॥ २४ ॥ वत्सप्रयुक्तांधेनुंचश्वेताश्वंराजहंसकं ॥ वेश्यांचपुष्पमालांचपताकांदधिपायसं
॥ २५ ॥ मणिंसुवर्णरजतंमुक्तामाणिक्यमीप्सितम् ॥ सद्योमांसंचंदनंचमाध्वीकंघृतमुत्तमं ॥ २६ ॥ कृष्णसारंफलंराजसि
द्धान्नंदर्पणंतथा ॥ विचित्रितंविमानंचसुदीप्तांप्रतिमांतथा ॥ २७ ॥ शुक्लोत्पलंपद्मवनंशंखचिल्लंचकोरकं ॥ मार्जारंपर्वतंमे

घंमयुरंशुकसारसं ॥ २८ ॥ शंखकोकिलवाद्यानांध्वनिंशुश्रावमंगलं ॥ विचित्रकृष्णसंगीतंहरिशब्दंजयध्वनिम् ॥ २९ ॥
एवंभूतंशुभंदृष्ट्वाश्रुत्वाप्रहृष्टमानसः ॥ प्रविवेशहरिंस्मृत्वापुण्यंवृंदावनंवनं ॥ ३० ॥ ददर्शपुरतोरम्यंरासमंडलमीप्सितं
चंदनागरुकस्तूरीपुष्पचंदनवायुना ॥ ३१ ॥ वासितंमंगलघटैरंभास्तंभैर्विराजितं ॥ आम्रपल्लवसंघैश्चपट्टसूत्रविचित्रितैः
॥ ३२ ॥ शोभितैःपरितःशश्वत्पद्मरागाविनिर्मितं ॥ शोभितंशोभनार्हैश्चत्रिकोटिरत्नमंदिरैः ॥ ३३ ॥ रम्यैःकुजकुटीरैश्चरा
जितंशतकोटिभिः ॥ रासंवृंदावनंदृष्ट्वाकियद्दूरंययौचसः ॥ ३४ ॥ ददर्शपुरतोरम्यंनंदव्रजमनुत्तमं ॥ परंवैकुंठसंकाशंवैकुंठ
निलयंशुभं ३५ रत्नसोपानसंयुक्तंरत्नस्तंभैर्विराजितं ॥ नानाचित्रविचित्राढ्यंसद्रत्नवलयान्वितं ३६ खचितंमाणिसारे
णरचितंविश्वकर्मणा ॥ द्वारिदृष्टेनमार्गेणराजद्वारंविवेशसः ३७ पताकारत्नजालाढ्यंमुक्तामाणिक्यभूषितं ॥ रत्नदर्प
णशोभाढ्यंरत्नचित्रविचित्रितं३८ रत्नवीथीविरचितंमंगलंमंगलैर्घटैः ॥ अक्रूरागमनंश्रुत्वासाल्हादोनंदएवच ॥ सहितोरा
मकृष्णाभ्यांजगामानुव्रजायवै ३९ वृषभान्वादिभिर्युक्तःकृत्वावेश्यांपुरःसरां ॥ पूर्णकुंभंगजेंद्रंचकृत्वाग्रेशुक्लधान्यकं ४०
कृष्णांगांमधुपर्कंचपाद्यंरत्नासनादिकं ॥ गृहीत्वासादरःशांतःसस्मितोविनयस्तथा४१ आनंदयुक्तोनंदश्चसगणःसहबालकः
॥ दृष्ट्वाक्रूरंमहाभागंतूर्णमालिंगनंददौ ४२ प्रणेमुःशिरसासर्वेगोपाजगृहुराशिषं ॥ परस्परंचसंयोगोबभूवगुणवान्मुने ४३
क्रोडेचकाराक्रूरश्चकृष्णंरामंक्रमेणच ॥ चुचुंबगंडयुगलेपुलकांचितविग्रहः ॥ ४४ ॥ साश्रुनेत्रोतिसाल्हादःकृतार्थःसिद्धवां
छितः ॥ ददर्शकृष्णंद्विभुजंक्षणंश्यामलसुंदरं ॥ ४५ ॥ पीतवस्त्रपरीधानंमालतीमाल्यभूषितं ॥ चंदनोक्षितसर्वांगंपरंवंशीध
रंवरं ॥ ४६ ॥ स्तुतंब्रह्मेशशेषाद्यैर्मुनींद्रैःसनकादिभिः ॥ वीक्षितंगोपकन्याभिःपरिपूर्णतमंविभुं ॥ ४७ ॥ क्षणंददर्शक्रोड

स्थंसस्मितंचचतुर्भुजं ॥ लक्ष्मीसरस्वतीयुक्तंवनमालाविभूषितं ॥ ४८ ॥ सुनंदनंदकुमुदैःपार्षदैःपरिसेवितं ॥ सेवितंसिद्ध
संघैश्चभक्तिनम्रैःपरात्परं ४९ क्षणंददर्शदेवंतंपंचवक्त्रंत्रिलोचनं ॥ शुद्धस्फटिकसंकाशंनागराजविराजितं ५० दिगंबरंप
रंब्रह्मभस्मांगंचजटायुतं ॥ जपमालाकरंध्याननिष्ठंश्रेष्ठंचयोगिनां ॥ ५१ ॥ क्षणंचतुर्मुखंध्याननिष्ठंश्रेष्ठंमनीषिणां ॥ क्ष
णंधर्मस्वरूपंचशेषरूपंक्षणंक्षणं ॥ ५२ ॥ क्षणंभास्कररूपंचज्योतीरूपंसनातनं ॥ क्षणंपरमशोभाढ्यंकोटिकंदर्पनिंदितं ॥
॥ ५३ ॥ कामिनीकमनीयंचकामुकंकामसंयुतं ॥ एवंभूतंशिशुंदृष्ट्वास्थापयामासवक्षसि ॥ ५४ ॥ रत्नसिंहासनेरम्येनंद
दत्तेचनारद ॥ कृत्वाप्रदक्षिणंभक्त्यापुलकांचितविग्रहः ॥ ५५॥ प्रणम्यशिरसाभूमौतुष्टावपुरुषोत्तमं ॥ ॥ अक्रूरउवाच ॥
नमःकारणरूपायपरमात्मस्वरूपिणे ॥ ५६ ॥ सर्वेषामपिविश्वानामीश्वरायनमोनमः ॥ परायप्रकृतेरीशपरात्परतरा
यच ॥ ५७ ॥ निर्गुणायनिरीहायनिरुपायस्वरूपिणे ॥ सर्वदेवस्वरूपायसर्वदेवेश्वरायच ॥ ५८ ॥ सर्वदेवाधिदेवायवि
श्वादिभूतरूपिणे ॥ असंख्येषुचविश्वेषुब्रह्मविष्णुशिवात्मकः ॥ ५९ ॥ स्वरूपायादिबीजायतदीशविश्वरूपिणे ॥ नमो
गोपांगनेशायगणेशेश्वररूपिणे ॥ ६० ॥ नमःसुरगणेशायराधेशायनमोनमः ॥ राधारमणरूपायराधारूपधरायच ॥६१
राधाराध्यायराधायाःप्राणाधिकतरायच ॥ राधासाध्यायराधाधिदेवप्रियतमायच ॥ ६२ ॥ राधाप्राणाधिदेवायविश्व
रूपायतेनमः ॥ वेदस्तुतात्मवेदज्ञरूपिणेवेदिनेनमः ॥ ६३ ॥ वेदाधिष्ठातृदेवायवेदबीजायतेनमः ॥ यस्यलोमसुविश्वानि
चासंख्यानिचनित्यशः ॥ ६४ ॥ महद्विष्णोरीश्वरायविश्वेशायनमोनमः ॥ स्वयंप्रकृतिरूपायप्राकृतायनमोनमः ॥ ६५॥
प्रकृतीश्वररूपायप्रधानपुरुषायच ॥ इत्येवंस्तवनंकृत्वामूर्च्छामापसभातले ॥ ६६॥ पपातसहसाभूमौपुनरीशंददर्शसः ॥

बहिस्थंत्त्वदयस्थंचपरंत्त्वष्टमतिस्तुसः ॥ ६७ ॥ मिष्टान्नंभोजयामासकुशलंचपुनःपुनः ॥ अक्रूरःकथयामासकंसवृत्तांत मीप्सितं ॥ ६८ ॥ स्वपित्रोर्मोक्षणार्थंचगमनंरामकृष्णयोः ॥ इत्यक्रूरकृतंस्तोत्रंयःपठेत्सुसमाहितः ॥ ६९ ॥ अपुत्रौलभ तेपुत्रमभार्योलभतेप्रियाम् ॥ अधनोधनमाप्नोतिनिर्भूमिरुर्वरांमहीं ॥ ७० ॥ हतप्रजःप्रजांलेभेप्रतिष्ठांचप्रतिष्ठितः ॥ य शःप्राप्नोतिविपुलमयशस्वीचलीलया ॥ ७१ ॥ अथसुष्वापसमयेपरंसंत्त्वष्टमानसः ॥ रम्येचंपकतल्पेचकृष्णंकृत्वास्वव क्षसि ॥ ७२ ॥ प्रातरुत्थायसहसाकृत्वान्हिकमनुत्तमं ॥ स्वरथेस्थापयामासरामंकृष्णंजगत्पतिं ॥ ७३ ॥ गव्यंपंचप्रका रंचनानाद्रव्यंसुदुर्लभं ॥ वृषभानंचनंदंचसुनंदंचंद्रभानकं ॥ ७४ ॥ नानाप्रकारंवाद्यंचमृदंगमुरजादिकं ॥ पटहंपणवंचै वढक्कांदुंदुभिमानकं ॥ ७५ ॥ सज्जासंनहनींकांस्यपट्टमर्दलमंडवीं ॥ वादयामाससानंदंनंदगोपोव्रजेश्वरः ॥ ७६ ॥ श्रुत्वा वाद्यंचगोप्यश्चगमनंरामकृष्णयोः ॥ दृष्ट्वाकृष्णंरथस्थंतमाययुःकोपपीडिताः ॥ ७७ ॥ कृष्णेनवारिताःसर्वाःप्रेरिताराधया द्विज ॥ बभंजुरीश्वररथंपादघातेनलीलया ॥ ७८ ॥ तत्रसर्वेषुगोपेषुहाहाकारंकृतेषुच ॥ प्रययुर्बलवत्यश्चकृष्णंकृत्वा स्ववक्षसि ॥ ७९ ॥ काचिक्रूरंतमक्रूरंभर्त्सयामासकोपतः ॥ काश्चिद्बध्वाचवस्त्रेणचाक्रूरंप्रययुस्ततः ॥ ८० ॥ काचित्तंताड यामासकंकणेनकरेणच ॥ तद्वस्त्रंहारयामासकृत्वाविवसनंमुने ॥ ८१ ॥ क्षतविक्षतसर्वांगंदृष्ट्वाक्रूरंचमाधवः ॥ जगामरा धानिकटंबोधयामासतांपुनः ॥ ८२ ॥ आध्यात्मिकेनयोगेनविनयेनचसादरं ॥ अक्रूरंबोधयामासबोधयामासतांविभुः ॥ ॥ ८३ ॥ आकाशात्पतितंदिव्यंमंत्रप्रस्थापितंरथं ॥ विचित्रवस्त्रसंयुक्तंददर्शपुरतोहरिः ॥ ८४ ॥ खचितंमणिराजेनरचितं विश्वकर्मणा ॥ तंदृष्ट्वामातुभवनमाजगामजगत्पतिः ८५ भुक्त्वापीत्वासुखंसुप्त्वागमनेसहबांधवः ॥ तस्थौमुनींद्रदेवेंद्रब्र

ह्मेशशेषवंदितः॥८६॥सुषुपुर्गोपिकाःसर्वाःपरंसंहृष्टमानसाः॥पुष्पतल्पेचरम्येचराधयासहनारद ॥८७॥सर्वैचानंदयुक्ताश्च
जनागोकुलवासिनः ॥ केचिद्गोपाश्चननृतुःकेचित्संगीततत्पराः ॥ ८८ ॥ ॥ इति०महा०श्रीकृ० गोपीविषयोनामसप्ततित
मोध्यायः ॥ ७० ॥ ॥ श्रीनारायणउवाच ॥ ॥ राधिकायांचसुप्तायांसुप्तासुगोपिकासुच ॥ पुष्पचंदनतल्पेचवायुनासुर
भीकृते ॥ १ ॥ तृतीयप्रहरेतीरेनिशायांचशुभेक्षणे ॥ शुभचंद्रर्क्षयोगेचाऽमृतयोगसमन्विते ॥ २ ॥ सौम्यस्वामियुतेलग्नेसौ
म्यग्रहविलोकिते ॥ पापग्रहसमासक्तदुष्टदोषादिवर्जिते ॥ ३ ॥ यशोदांबोधयामासकारयामासमंगलं ॥ बंधूनाश्वासया
माससमुत्थायहरिःस्वयं ॥ ४ ॥ वाद्यंनिषेधयामासराधिकाभयभीतवत् ॥ स्वतंत्रोविश्वकर्ताचपाताभर्तास्वतंत्रवत् ॥
॥ ५ ॥ प्रक्षाल्यपादयुगुलंधृत्वाधौतेचवाससी ॥ उवाससंस्कृतेस्थानेविलिप्तेचंदनादिना ॥ ६ ॥ फलपल्लवसंयुक्तंसंस्कृतं
चंदनादिभिः ॥ वामेकृत्वापूर्णकुंभंवाह्निंविप्रंस्वदक्षिणे ॥ ७ ॥ पतिपुत्रवतींदीपंदर्पणंपुरतस्तथा ॥ दूर्वाकांडंचसुस्निग्धंपु
ष्पंधान्यंसितंशुभं ॥ ८ ॥ गुरुदत्तंगृहीत्वाचप्रदधौमस्तकोपरि ॥ घृतंददर्शमाध्वीकंरजतंकांचनंदधि ॥ ९ ॥ चंदनंलेपनं
कृत्वापुष्पमालांगलेदधौ ॥ गुरुवर्गंब्राह्मणंचवंदयामासभक्तितः ॥ १० ॥ शंखध्वनिंवेदपाठंसंगीतंमंगलाष्टकं ॥ विप्रा
शीर्वचनंरम्यंशुश्रावपरमादरं ॥ ११ ॥ ध्यात्वामंगलरूपंचसर्वत्रमंगलप्रदं ॥ चिक्षेपदक्षिणंपादंसुंदरंस्वात्मविग्रहं ॥ १२ ॥
विधृत्यनासिकांवामभागंमध्यमयाविभुः ॥ विसृज्यवायुंसंपूर्णंनासादक्षिणरंध्रतः ॥ १३ ॥ ततोपयौनंदनंदोनंदस्यप्रां
गणंवरं ॥ सानंदःपरमानंदोनित्यानंदःसनातनः ॥ १४ ॥ नित्योनित्योनित्यबीजस्वरूपोनित्यविग्रहः ॥ नित्यांगभूतोनि
त्येशोनित्यकृत्यविशारदः ॥ १५ ॥ नित्यनूतनरूपश्चनित्यनूतनयौवनः ॥ नित्यनूतनवेषश्चवयसानित्यनूतनः ॥ १६ ॥ नि

त्यनूतनसंभाषोयत्प्रेमनित्यनूतनं ॥ सुधारसपरंमिष्टंयद्वाक्यंनित्यनूतनम् ॥ १७॥ स्थायंस्थायंप्रांगणेस्मिन्मायेशोमायया युतः ॥ अतीवरम्येमुस्निग्धोबभूवगमनोन्मुखः ॥ १८ ॥ रंभास्तंभसमूहैश्चरसालपल्लवान्वितैः ॥ पट्टसूत्रनिबद्धैश्चसुंदरैश्चसुसंस्कृते ॥ १९ ॥ पद्मरागेणखचितेरचितेविश्वकर्मणा ॥ कस्तूरीकुंकुमाक्तैश्चचंदनैश्चसुसंस्कृते ॥ २० ॥ तत्रतस्थौस्वयंकृष्णःसहाक्रूरःसबांधवः ॥ यशोदयासमाश्लिष्टावामपार्श्वेनमायया ॥२१ ॥ नंदेनानंदयुक्तेनाऽश्लिष्टोदक्षिणपार्श्वतः ॥ संभाषितोबांधवैश्चपित्रामात्राचुचुंबितः ॥ २२ ॥ ॥ इतिश्रीब्रह्म० महापु० श्रीकृ० यात्रामंगलंनामैकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ श्रीनारायणउवाच ॥ ॥ अथकृष्णोगुरुंनत्वानिर्गम्यशिबिरान्मुने ॥ आरुह्यस्वर्गयानंचशुभांमधुपुरींययौ ॥ १ ॥ विवेशमथुरांरम्यांसहाक्रूरगणैःसमं ॥ निर्जय्यशक्रनगरींशोभायुक्तांमनोहरां ॥ २ ॥ रत्नश्रेष्ठेनखचितांरचितांविश्वकर्मणा ॥ अमूल्यरत्नकलशैर्राजितैश्चविराजितां ॥ ३ ॥ राजमार्गशतैरिष्टैर्वेष्टितांरुचिरैर्वरैः ॥ चंद्राकारैश्चंद्रसारैर्मणिभिःपरिसंस्कृतैः ॥ ४ ॥ विचित्रैर्मणिसारैश्चवीथीशतविनिर्मितैः ॥ शोभितैर्वणिजैःश्रेष्ठैःपुण्यवस्तुसमन्वितैः ॥ ५॥ सरोवरसहस्रैश्चपरितःपरिशोभितां ॥ शुद्धस्फटिकसंकाशैःपद्मरागविराजितैः ॥ ६ ॥ रत्नालंकारभूषाढ्यैःशोभितांपद्मिनीगणैः ॥ स्थिरयौवनसंयुक्तैर्निमेषरहितैःपरैः ॥ ७ ॥ साक्षतैरूर्ध्ववदनैःकृष्णदर्शनलालसैः ॥ भ्रूभंगलीलालोलैश्चशश्वच्चंचललोचनैः ॥ ८ ॥ शश्वत्कामसमायुक्तैःपीनश्रोणीपयोधरैः ॥ कोमलांगैर्मध्यकूपैरतिरासविशारदैः ॥ ९ ॥ रत्ननिर्माणयानानांकोटिभिःपरिशोभितां ॥ भूषणैर्भूषिताभिश्चचित्रिताभिश्चचित्रकैः ॥ १० ॥ नानाप्रकारश्रीयुक्तांपुष्पोद्यानत्रिकोटिभिः ॥ नानापुष्पैःपुष्पिताभिर्युक्ताभिर्मधुसूदनैः ॥ ११ ॥ माधुर्यमधुसंयुक्तैर्मधुलुब्धैर्मुदान्वितैः ॥ माध्वीकमधुमत्तै

श्वयुक्तैर्मधुकरीचयैः ॥ १२ ॥ नानाप्रकारदुर्गैश्चदुर्गम्यांवैरिणांगणैः ॥ रक्षितांरक्षकैःशश्वद्रक्षाशास्त्रविशारदैः ॥ १३ ॥
त्रिकोट्याट्टालिकाभिश्चसंयुक्तांसुमनोहरां ॥ रचिताभिश्चसद्रत्नैर्विचित्रैर्विश्वकर्मणा ॥ १४ ॥ एवंभूतांचमथुरांदृष्ट्वाकम
ललोचनः ॥ ददर्शपथिकुब्जांतांवृद्धामतिजरातुरां ॥ १५ ॥ यांतींदंडसहायेनचातिनम्रांनमद्वलीं ॥ रक्षितांविकृताकारां
बिभ्रतींचंदनद्रवं ॥ १६ ॥ कस्तूरीकुंकुमाक्तंचस्पृष्टमात्रेणनारद ॥ सुगंधिमकरंदेनगंधाढ्यंसुमनोहरं ॥ १७॥ सादृष्ट्वास
स्मितावृद्धाश्रीकांतंशांतमीश्वरं ॥ श्रीयुक्तंश्रीनिवासंतंश्रीबीजंश्रीनिकेतनं १८ प्रणम्यसहसामूर्ध्नाभक्तिनम्रापुटांजलिः॥
प्रददौचंदनंतस्यगात्रेश्यामलसुंदरे ॥ १९ ॥ गात्रेषुतद्व्रणानांचस्वर्णपात्रकरावरा ॥ कृत्वाप्रदक्षिणंकृष्णंप्रणनामपुनः
पुनः ॥ २० ॥ श्रीकृष्णदृष्टिमात्रेणश्रीयुक्तासावभूवह ॥ सहसाश्रीसमारम्यारूपेणयौवनेनच ॥ २१ ॥ वह्निशुद्धासुवस
नारत्नभूषणभूषिता ॥ यथाद्वादशवर्षीयाकन्याधन्यामनोहरा ॥ २२ ॥ बिंबोष्ठीसस्मिताश्यामातप्तकांचनसन्निभा ॥ सु
श्रोणीसुदतीबिल्वफलतुल्यपयोधरा॥२३॥अमूल्यरत्ननिर्माणहारसारविराजिता॥गजेंद्रराजगमनारत्नमंजीररंजिता॥
॥ २४ ॥ बिभ्रतीकबरीभारंमालतीमाल्यवेष्टितम् ॥ रक्षितंवामभागेनरुचिरंवर्तुलाकृतिम् ॥ २५ ॥ कस्तूरींबिंदुमुपरिसा
र्द्धंचंदनबिंदुभिः ॥ रत्नदर्पणहस्ताचप्रशस्तारतिकर्मसु ॥ २६ ॥ श्रीकृष्णंवरयामासलोललोचनकोणतः ॥ श्रीवासस्तां
समाश्वास्यययौस्थानांतरंपरम् ॥ २७ ॥ कृतार्थरूपासाप्रीत्याययौपद्मायथालयम् ॥ रत्नशय्याविरचितंसद्रत्नसारनि
र्मितम् ॥ २८ ॥ रत्नप्रदीपराजीभीराजिताभिश्चराजितम् ॥ रत्नदर्पणराजैश्चराजितंपरितस्ततः ॥ २९ ॥ सिंदूरवस्त्रतां
बूलंश्वेतचामरमाल्यकम् ॥ बिभ्रतीभिश्चदासीभिर्वेष्टितंदाससंघकैः ॥ ३० ॥ तत्रगत्वाचभुक्त्वाचमिष्टान्नंपरमंमुदा ॥

सुष्वापरत्नपर्यंकेसादासीभिश्चसेविता ॥ ३१ ॥ सकर्पूरंचतांबूलंकस्तूरीकुंकुमान्वितम् ॥ चंदनंस्थापयामासस्वतल्पेहर
येसती ॥ ३२ ॥ मालतीमाल्ययुगुलंकर्पूरादिसुवासितम् ॥ शीतलंसलिलंस्वादुमिष्टान्नंस्वसमीपतः ॥ ३३ ॥ कर्मणाम
नसावाचाचिंतयंतीहरेःपदम् ॥ हरेरागमनंचापिमुखचंद्रंमनोहरम् ॥ ३४ ॥ जगत्कृष्णमयंशश्वत्पश्यंतीकामुकीमुने ॥
कोटिकंदर्पलीलाभंकामासक्तंचकामुकम् ॥ ३५ ॥ ततोददर्शश्रीकृष्णोमालाकारंमनोहरम् ॥ मालासमूहंबिभ्रंतंगच्छंतं
राजमंदिरम् ॥ ३६ ॥ सोपिदृष्ट्वाचश्रीकांतंप्रणम्यशिरसाभुवि ॥ ददौमाल्यसमूहंचकृष्णायपरमात्मने ॥ ३७ ॥ कृष्णस्त
स्मैवरंदत्वास्वदास्यमतिदुर्लभम् ॥ माल्यंगृहीत्वाप्रययौराजमार्गंवरंवरः ॥ ३८ ॥ ततोददर्शरजकंबिभ्रंतंवस्त्रपुंजकं ॥
अहंकृतिबलिष्ठंचसततंयौवनोद्धतम् ॥ ३९ ॥ वस्त्रंययाचेतंकृष्णोविनयेनमहामुने ॥ सतस्मैनददौवस्त्रंतमुवाचचानिष्ठुरं ॥
॥ ४० ॥ ॥ रजकउवाच ॥ ॥ गोरक्षकानांत्वयोग्यंवस्त्रमेतत्सुदुर्लभम् ॥ राजयोग्यंचहेमूढहेगोपजनवल्लभ ॥ ४१ ॥
गृहीत्वागोपकन्याश्चकन्यालोलुपलंपट ॥ यद्विहारःकृतस्तत्रवृंदारण्येप्यराजके ॥ ४२ ॥ नचात्रतादृशंकर्मराज्ञःकंसस्य
वर्त्मनि ॥ विद्यमानोत्रराजेंद्रःशास्तादुष्टस्यतत्क्षणम् ॥ ४३ ॥ रजकस्यवचःश्रुत्वाजहासमधुसूदनः ॥ जहासबलदेवश्च
साक्रूरोगोपवर्गकः ॥ ४४ ॥ तंनिहत्यचपेटेनजग्राहवस्त्रपुंजकम् ॥ वस्त्रंसंधारयामासश्रीकृष्णःसगणस्तथा ॥ ४५ ॥ रत्न
यानेनगोलोकंपार्षदैर्वेष्टितेनच ॥ ययौरजकराजश्चधृत्वादिव्यकलेवरम् ॥ ४६ ॥ शश्वद्यौवनयुक्तंचजरामृत्युहरंवरं ॥
पीतवस्त्रसमासक्तंसस्मितंश्यामसुंदरम् ॥ ४७ ॥ बभूवसोपिगोलोकेपार्षदेषुचपार्षदः ॥ कृष्णस्यागमनंतत्रसस्मारसततं
वशी ॥ ४८ ॥ अस्तंगतोदिनकरोप्यक्रूरःस्वगृहंययौ ॥ कृष्णस्यानुमतिंप्राप्यकृष्णोपिकस्यचिद्गृहम् ॥ ४९ ॥ वैष्णवस्य

कुविंदस्यतस्मिन्नस्तधनस्यच ॥ सानंदोनंदसहितोबलदेवादिभिर्युतः ॥ ५० ॥ सभक्तःपूजयामासप्रणम्यश्रीनिकेतनं ॥
तस्मैददौस्वदास्यंचवरंब्रह्मादिदुर्लभम् ॥ ५१ ॥ पर्यंकेसुषुपुःसर्वेभुक्त्वामिष्टान्नमुत्तमम् ॥ निद्रांचलेभेसाकुब्जानिद्रे
शोपियर्योमुदा ॥ ५२ ॥ गत्वाददर्शकुब्जांतांरत्नतल्पेचनिद्रिताम् ॥ दासीगणैःपरिवृतांसुंदरींकमलामिव ॥५३॥ बोधया
मासतांकृष्णोनदासीश्चापिनिद्रिताः ॥ तामुवाचजगन्नाथोजगन्नाथप्रियांसतीम् ॥ ५४ ॥ ॥ श्रीभगवानुवाच ॥ ॥ त्य
जनिद्रांमहाभागेश्रृंगारंदेहिसुंदरि ॥ पुराशूर्पणखात्वंचभगिनीरावणस्यच ॥ ५५ ॥ तपःप्रभावात्कामांतंभजश्रीकृष्ण
जन्मनि ॥ रामजन्मनिमद्धेतोस्त्वयाकांतेतपःकृतम् ॥ ५६ ॥ अधुनासुखसंभोगंकृत्वागच्छममालयम् ॥ सुदुर्लभंचगो
लोकंजरामृत्युहरंपरम् ॥ ५७ ॥ इत्युक्त्वाश्रीनिवासश्चकृत्वातामेववक्षसि ॥ नग्नांचकारश्रृंगारंचुंबनंचापिकामुकीम् ॥
॥ ५८ ॥ सास्स्मिताचश्रीकृष्णंनवसंगमलज्जिता ॥ चुचुंबगंडेक्रोडेतांचकारकमलांयथा ॥ ५९ ॥ सुरतेर्विरतिर्नास्तिदंप
तीरतिपंडितौ ॥ नानाप्रकारसुरतंबभूवतत्रनारद ॥ ६० ॥ स्तनश्रोणियुगंतस्याविक्षतंचचकारह ॥ भगवान्नखरैस्तीक्ष्णै
र्दशनैरधरंवरं ॥६१॥ निशावसानसमयेवीर्याधानंचकारसः ॥ सुखसंभोगभोगेनमूर्च्छामापचसुंदरी ॥ ६२ ॥ तत्राजगाम
तांतंद्राकृष्णवक्षस्थलस्थितां ॥ बुबुधेनदिवारात्रंस्वर्गेमृत्युंजलंस्थलं ॥६३॥ अथाजगामगोलोकात्रथोरत्नविनिर्मितः॥
जगामतेनतंलोकंधृत्वादिव्यकलेवरं ॥ ६४ ॥ वन्हिशुद्धांशुकाधानंरत्नभूषणभूषितं ॥ प्रतप्तकांचनाभासंनित्यंजन्मादिव
र्जितम् ॥ साबभूवचतत्रैवगोपीचंद्रमुखीमुने ॥ ६५ ॥ गोप्यःकतिविधास्तस्याबभूवुःपरिचारिकाः ॥ भगवानपितत्रैव
क्षणंस्थित्वास्वमंदिरम् ॥ जगामयत्रनंदश्चसानंदोनंदनंदनः ॥ ६६ ॥ अथकंसोनिशायांचनिद्रायांभयविह्वलः ॥ ददर्श

दुःखदुःस्वप्नमात्मनोमृत्युसूचकम् ॥६७॥ ददर्शं सूर्यंभूमिस्थंचतुःखंडंनभश्च्युतम् ॥दशखंडंचंद्रबिंबंभूमिस्थंखात्च्यु
तंमुने ॥ ६८ ॥ पुरुषान्विकृताकारान्रज्जुहस्तान्दिगंबरान् ॥ विधवांशूद्रपत्नींचनग्नांचाच्छिन्ननासिकाम् ॥६९॥ हसंतीं
चूर्णतिलकांश्वेतकृष्णोच्चमूर्द्धजाम् ॥ खड्गखर्परहस्तांचलोलजिव्हांचबिभ्रतीम् ॥ ७० ॥ रुंडमालासमायुक्तांगर्दभंम
हिषंवृषम् ॥ सूकरंभल्लुकंकाकंगृध्रंकंकंचवानरम् ॥ ७१ ॥ श्मशानंदग्धकाष्ठंचशुष्ककाष्ठंकुशंतृणम् ॥ गच्छंतंचकबंधं
चनदंतंमृतमस्तकम् ॥ ७२ ॥ दग्धस्थानंभस्मयुतंतडागंजलवर्जितम् ॥ दग्धमत्स्यंचलोहंचनिर्वाणदग्धकाननम् ॥
॥ ७३ ॥ गलत्कुष्ठंचवृषलंनग्नंचमुक्तमूर्द्धजम् ॥ अतीवरुष्टंविप्रंचशपंतंगुरुमीदृशम् ॥ ७४ ॥ अतीवरुष्टंभिक्षुंचयोगिनं
वैष्णवंनरम् ॥ एवंदृष्ट्वासमुत्थायकथयामासमातरम् ॥पितरंभ्रातरंपत्नींरुदंतींप्रेमविव्हलाम् ॥ ७५॥ मंचकान्कारया
मासस्थापयामासहस्तिनम् ॥ मल्लंसैन्यंचयोद्धारंकारयामासमंगलम् ॥ ७६ ॥ सभांचकारयामासपुण्यंस्वस्त्ययनंशिव
म् ॥ यत्नेनयोजयामासयोगेयुक्तंपुरोहितम् ॥ उवासमंचकेरम्येधृत्वाखड्गंविलक्षणम् ॥ ७७॥ रणेनियोजयामासयो
द्धारंयुद्धकोविदम् ॥ वासयामासराजेंद्रान्ब्राह्मणांश्चमुनीश्वरान् ॥ ७८ ॥ ब्राह्मणांश्चसुहृद्वर्गान्धर्मिष्ठान्रणकोविदान्
अथाजगामगोविंदोरामेणसहनारद ॥ ७९ ॥महेशस्यधनुर्मध्यंबभंजतत्रलीलया ॥ शब्देनतस्यमथुराबधिराचबभूवह
॥ ८० ॥ विषादंप्रापकंसश्चमुदंचदेवकीसुतः ॥ उपास्थितःसभामध्येगजमल्लंनिहत्यच ॥ ८१ ॥ योगीददर्शतंदेवंपरमात्मा
नमीश्वरम् ॥ यथात्हृत्पद्ममध्यस्थंतादृशंबहिरेवच ॥ ८२ ॥ राजेंद्ररूपंराजानःशास्तारंदंडधारिणाम् ॥ पितामातादुग्ध
मुखंस्तनांधंबालकंयथा ॥ ८३ ॥ कामिन्यःकोटिकंदर्पलीलालावण्यधारिणम् ॥कंसश्चकालपुरुषंवैरिणंतस्यबांधवाः ॥

॥ ८४ ॥ मल्लामृत्युप्रदचैवप्राणतुल्यंचयादवाः ॥ नमस्कृत्यमुनीन्विप्रान्पितरंमातरंगुरुम् ॥ ८५ ॥ जगाममंचकाभ्या
शंहस्तेकृत्वासुदर्शनम् ॥ दृष्ट्वाभक्तंभक्तबंधुःकृपयाचकृपानिधिः ॥ ८६ ॥ आकृष्यमंचकात्कंसंजघानलीलयामुने ॥ रा
जाददर्शविश्वंचसर्वंकृष्णमयंपरम् ॥ ८७ ॥ पुरतोरत्नयानंचहीरहारविभूषितम् ॥ ययौविष्णुपदंस्फीतोदिव्यरूपंविधा
यच ॥ ८८ ॥ तेजोविवेशपरमंकृष्णपादांबुजेमुने ॥ निर्वृत्यतस्यसत्कारंब्राह्मणेभ्योधनंददौ ॥ ८९ ॥ ददौराज्यंराजछ
त्रमुग्रसेनायधीमते ॥ सबभूवनृपेंद्रश्चचंद्रवंशसमुद्भवः ॥ ९० ॥ विललापकंसमातापत्नीवर्गश्चतत्पिता ॥ बांधवामातृवर्ग
श्चभगिनीभ्रातृकामिनी ॥ ९१ ॥ दर्शनंदेहिराजेंद्रसमुत्तिष्ठनृपासने ॥ राज्यंरक्षधनंरक्षबांधवंबलमेवच ॥ ९२ ॥ सर्वंच
राचराधारंयःसृजत्येवलीलया ॥ ब्रह्मेशशेषधर्माश्चदिनेशश्चगणेश्वरः ॥ ९३ ॥ मुनींद्रवर्गोदेवेंद्रोध्यायतेयमहर्निशम् ॥
वेदास्तुवंतियंकृष्णंस्तौतिभीतासरस्वती ॥ ९४ ॥ स्तौतियंप्रकृतिर्दृष्टाप्राकृतंप्रकृतेःपरम् ॥ स्वेच्छामयंनिरीहंचनिर्गुणं
चनिरंजनम् ॥ ९५ ॥ परात्परतरंब्रह्मपरमात्मानमीश्वरम् ॥ नित्यंज्योतिःस्वरूपंचभक्तानुग्रहविग्रहम् ॥ ९६ ॥ नित्या
नंदंचनित्यंचनित्यमक्षरविग्रहम् ॥ सोवतीर्णोहिभगवान्भारावतरणायच ॥ ९७ ॥ गोपालबालवेषश्चमायेशोमाययाप्र
भुः ॥ सयंहंतिचसर्वेशोरक्षितातस्यकःपुमान् ॥ ९८ ॥ सयंरक्षतिसर्वात्मातस्यहंतानकोपिच ॥ इत्येवमुक्त्वासर्वश्चविररा
ममहामुने ॥ ९९ ॥ ब्राह्मणान्भोजयामासतेभ्यःसर्वंधनंददौ ॥ भगवानपिसर्वात्माजगामपितुरंतिकम् ॥ १०० ॥ छि
त्वाचलोहनिगडंतयोर्मोक्षंचकारसः ॥ ननामदंडवद्भूमौमातरंपितरंतथा ॥ १०१ ॥ तुष्टावभक्त्यादेवेशोभक्तिनम्रात्मकंधरः ॥
श्रीभगवानुवाच ॥ ॥ पितरंमातरंविद्यामंत्रदंगुरुमेवच ॥ १०२ ॥ योनपुष्णातिपुरुषोयावज्जीवंचसोऽशुचिः ॥ सर्वेषा

पापिवा ॥ कृत्वालिंगंसकृत्पूज्यवसेत्कल्पायुषंदिवि ॥ ५४ ॥ ततोभवेतिविप्रश्चमहाप्राज्ञश्चभूमिवान् ॥ राजाभवेद्भारतेच लिंगानांशतपूजनात् ॥ ५५ ॥ सहस्रपूजनात्सोपिलभतेनिश्चितंफलं ॥ स्थित्वाचसुचिरंस्वर्गेराजेंद्रोभारतेभवेत् ॥ ५६ ॥ अयुतेचतदीशश्चलक्षेचपृथिवीश्वरः ॥ पूजनेचातिभक्त्याचाप्यतिरिक्तंफलंलभेत् ॥ ५७ ॥ तीर्थस्नानेनदानेनविप्राणांभोजनेनच ॥ नारायणार्चयाचैवविप्रजातिश्चकर्मणा ॥ ५८ ॥ अतिरिक्तेनतपसापंडितोब्राह्मणोभवेत् ॥ पंडितोब्राह्मणश्चैववैष्णवश्चजितेंद्रियः ॥ ५९ ॥ अनेकजन्मपुण्येनजायतेभारतेभुवि ॥ तस्यांघ्रिस्पर्शनेनैवसद्यःपूतावसुंधरा ॥ ६० ॥ तीर्थाःकुर्वंतितीर्थानिजीवन्मुक्ताश्चवैष्णवाः ॥ स्वपुंसांचसहस्रंचपुनंतीतिश्रुतौश्रुतं ॥ ६१ ॥ पापेनवैद्यजन्मैवदुश्चिकित्सोपिब्राह्मणः ॥ दुश्चिकित्सस्तथावैद्योव्यालग्राहीत्रिजन्मसु ॥ ६२ ॥ अतिक्रूरोदुराचारोद्वेष्टाचसुरविप्रयोः ॥ सभवेत्कुटिल्यालोवर्षाणांचसहस्रकं ॥ ६३ ॥ पुंश्चलीलंपटानांचदूतीयाकामिनीव्रज ॥ कालसूत्रेवर्षशतंस्थित्वाचगोधिकाभवेत् ॥ ६४ ॥ जन्मैकंगोधिकाभूत्वाहरिणश्चत्रिजन्मसु ॥ जन्मैकंमहिषश्चैवजन्मैकंभल्लुकोभवेत् ॥ ६५ ॥ जन्मैकंगंडकश्चैवसृगालश्चत्रिजन्मसु ॥ करकीयतडागंचसूप्तसस्यंददातिच ॥ ६६ ॥ सभवेन्नक्रजातिश्चकच्छपश्चत्रिजन्मसु ॥ वृथामांसंचयोभुंक्तेमत्स्यलुब्धश्चब्राह्मणः ॥ ६७ ॥ भुंक्तेमांसमदत्तंचसमीनश्चमृगोभवेत् ॥ वर्षाणांचसहस्रंचतातभुक्त्वाचकिल्बिषं ॥ ६८ ॥ कर्मभोगाच्छुचिर्भूत्वासपुनर्ब्राह्मणोभवेत् ॥ एकादशीविहीनश्चब्राह्मणःपतितोभवेत् ॥ ६९ ॥ भक्ष्यस्यद्विगुणंदत्वातेनपापेनमुच्यते ॥ ममजन्मदिनेचैवयोभुंक्तेमानवोधमः ॥ ७० ॥ त्रैलोक्यजनितंपापंसोपिभुंक्तेनसंशयः ॥ भुक्त्वाचनरकंसर्वंपश्चाच्चांडालतांव्रजेत् ॥ ७१ ॥ एवंचशिवरात्रौचश्रीरामनवमीदिने ॥ उपवासासमर्थश्चहविष्यान्नंसमाचरेत्

॥ ७२ ॥ ततोशक्तो दुर्बलश्च भोजयेद्ब्राह्मणानपि ॥ कृत्वा महोत्सवं पुण्यं मदीयं पातकाच्छुचिः ॥ ७३ ॥ तस्माद्यत्नेन कर्तव्यं नामसंकीर्तनं मम ॥ गृध्रः कोटिसहस्राणि शतजन्मनि सूकरः ॥ ७४ ॥ श्वापदं शतजन्मानि प्राप्नानि निशि भोजनात् ॥ अदीक्षि तो द्विजश्चैव शंखश्चिल्लः शुको भवेत् ॥ ७५ ॥ अनुद्वाही द्विजश्चैव राजहंसो भवेद्ध्रुवम् ॥ चित्रवस्त्रापहारी च मयूरश्च त्रिजन्म सु ॥ ७६ ॥ तैजःपात्रापहारी च भवेत्कारंडवश्चिरं ॥ सुराणां प्रतिमाचोरोप्यंधश्च सप्तजन्मसु ॥ ७७ ॥ दरिद्रो व्याधियुक्तश्च ब धिरश्चापि कुब्जकः ॥ स्त्रीतैलमधुमांसं च रवौ वा पंचपर्वसु ॥ ७८ ॥ सेवते यो महामुढो वज्रदंष्ट्रं व्रजेद्ध्रुवं ॥ पातकी दुःखितस्त त्र वर्षाणां च सहस्रकं ॥ ७९ ॥ ततो भवति म्लेच्छश्च चांडालः सप्तजन्मसु ॥ व्याधियुक्तस्ततः शूद्रो ब्राह्मणश्च ततः शुचिः ॥ ८० ॥ तस्माद्यत्नान्न भोक्तव्यं भारते धर्मभीरुणा ॥ ब्राह्मणं च सुरं दृष्ट्वा न नमेद्यो नराधमः ॥ ८१ ॥ यावज्जीवनपर्यंतमशुचिर्यवनो भवेत् ॥ अभ्युत्थानं न कुरुते दृष्ट्वा चागतब्राह्मणम् ॥ ८२ ॥ स भवेद्ब्रह्मघाती च सप्तजन्मसु निश्चितम् ॥ शिवद्वेषी कुक्कुटश्च देवलः सप्तजन्मसु ॥ ८३ ॥ पितृदेवार्चनं हंति वेदोक्तं ज्ञानदुर्बलः ॥ स याति नरकं पापी वर्षाणां च सहस्रकम् ॥ ८४ ॥ ततश्च रौरवं भुक्त्वा तीर्थकाकस्त्रिजन्मसु ॥ त्रिजन्मसु शृगालश्च तीर्थे भुङ्क्ते शवं व्रज ॥ ८५ ॥ त्रिजन्मसु भवेत्सोपि तीर्थे षु शवरक्षकः शवानां करमादत्ते कर्मणा कृतपातकी ॥ ८६ ॥ नित्यं सुरार्चनं कृत्वा दांभिको ज्ञानदुर्बलः ॥ गुरुं च नार्चयेद्भक्त्या तस्मै नान्नं ददाति यः ॥ ८७ ॥ स भवेद्देवलो दुःखी देवशापेन पातकी ॥ नित्यं सुरार्चनं कृत्वा दांभिको ज्ञानदुर्बलः ॥ ८८ ॥ पूजाफलं न ल भते देवद्रोही स दारुणः ॥ दीपनिर्वाणकर्ता च खद्योतः सप्तजन्मसु ॥ ८९ ॥ अतिविमत्स्यलुब्धश्चाप्यनैवेद्यं च खादति ॥ स भवे न्मत्स्यरंगश्च मार्जारः सप्तजन्मसु ॥ ९० गोणीहर्ता कपोतश्च मालाहर्ता विहंगमः ॥ चटको धान्यचोरश्च मांसचोरश्च कुंजरः ॥ ९१ ॥

कविप्रहर्ताविदुषांमंडूकःसप्तजन्मसु॥असत्कविर्ग्रामविप्रोनकुलःसप्तजन्मसु॥ १२॥कुष्ठीभवेच्चजन्मैकंकृकलासास्त्रिजन्मसु ॥ जन्मैकंवरलंचैवततोवृक्षपिपीलिका ॥ १३॥ ततःशूद्रश्चवैश्यश्चक्षत्रियोब्राह्मणस्तथा ॥ कन्याविक्रयकारीचचतुर्वर्णोहिमानवः॥ १४॥सद्यःप्रयातितामिस्रंयावच्चंद्रदिवाकरौ॥ततोभवतिव्याधश्चमांसविक्रयकारकः॥ १५॥ततोव्याधिर्भवेत्पश्चाद्योयथापूर्वजन्मनि ॥ मन्नामविक्रयीविप्रोनहिमुक्तोभवेद्ध्रुवं ॥ १६॥ मृत्युलोकेचमन्नामस्मृतिमात्रंनविद्यते॥ पश्चाद्भवेत्सगोयोनौजन्मैकंज्ञानदुर्बलः ॥ १७ ॥ ततश्छागस्ततोमेषोमहिषःसप्तजन्मसु ॥ महाचक्रीचकुटिलोधर्महीनश्चमानवः ॥ १८ ॥ जन्मैकंतैलकारश्चकुंभकारस्तथैवच ॥ मिथ्याकलंकवक्ताचदेवब्राह्मणनिंदकः ॥ १९ ॥ सभवेत्स्वर्णकारश्चरजकःसप्तजन्मसु ॥ ब्राह्मणःक्षत्रविट्शूद्राःकुत्सिताःशौचवर्जिताः ॥ २०० ॥ जन्मतेषांम्लेछयोनौवर्षाणामयुतंतथा ॥ कामतोयोषितांश्रोणीस्तनास्यंयश्चपश्यति ॥ १ ॥ सभवेद्दृष्टिहीनश्चपरत्रापिनपुंसकः ॥ विप्रोभिचारकर्ताचहिंसकोज्ञानदुर्बलः ॥ २ ॥ यात्येवमंधतामिस्रंवर्षाणामयुतंतथा ॥ तदाभवतिदैवज्ञोप्यग्रदानीचदुर्मतिः ॥ ३ ॥ ततःशूद्रोभवेद्विप्रोभोगेनकर्मणस्तथा ॥ शास्त्रज्ञाताचदैवज्ञोमिथ्यावदतिलोभतः ॥ ४ ॥ सभवेच्चध्रुवंज्येष्ठीवानरःसप्तजन्मसु ॥ अनेकजन्मतपसाभारतेब्राह्मणोभवेत् ॥ ५ ॥ सुबुद्धिरतिधर्मिष्ठोधर्महीनिश्चपातकी ॥ स्वधर्मनिरतोविप्रःपरमाच्चहुताशनात् ॥ ६॥ पवित्रश्चातितेजस्वीतस्माद्भीतःसुरःसदा ॥ नदीषुचयथागंगातीर्थेषुपुष्करंयथा ॥ ७ ॥ पुरीषुचयथाकाशीयथाज्ञानिषुशंकरः ॥ शास्त्रेषुचयथावेदायथाश्वत्थश्चपादपे ॥ ८ ॥ ममपूजातपस्यासुव्रतेष्वनशनंतथा ॥ तथाजातिषुसर्वासुब्राह्मणःश्रेष्ठएवच ॥ ९ ॥ विप्रपादेषुतीर्थानिपुण्यानिचव्रतानिच ॥ विप्रपादरजःशुद्धंपापव्याधिविमर्दनम् ॥ १० ॥ शुभाशी

र्वचनंतेषांसर्वकल्याणकारणम् ॥ एतत्तेकथितंतातविपाकःकर्मणामहो ॥ ११ ॥ यथाश्रुतंयथाज्ञानंतदशेषंनिशामय ॥
श्रुत्वाधर्मविपाकंचवाचकायसुवर्णकम् ॥ १२ ॥ दद्यात्तस्मैचरौप्यंचवस्त्रंतांबूलमेवच ॥ सुवर्णशतकंदद्यात्सद्योदेहीचंगो
कुलं ॥ रौप्यंवस्त्रंचतांबूलंमत्प्रीत्याब्राह्मणायच ॥ २१३ ॥ ॥ इतिश्रीब्रह्मवै० महापु० श्रीकृष्णज० भगवन्नंदसंवादेपं
चाशीतितमोऽध्यायः ॥ ८५ ॥ नंदउवाच ॥ केदारकन्याप्रस्तावात्कथितंकर्मकीर्तनं ॥ कृत्यास्त्रीणांप्रसंगेनतद्व्यासेन
वदप्रभो ॥ १ ॥ केदारकन्यासाकावाकोवाकेदारभूपतिः ॥ कस्यवंशेचतज्जन्मतन्मेऽव्याख्यातुमर्हसि ॥ २ ॥ श्रीभग
वानुवाच ॥ पुरादौब्रह्मणःपुत्रौमनुःस्वायंभुवस्तथा ॥ तस्यस्त्रीशतरूपाचधन्यामान्याचयोषिताम् ॥ ३ ॥ प्रियव्रतोत्ता
नपादौतयोःपुत्रौबभूवतुः ॥ उत्तानपादपुत्रश्चध्रुवएवमहायशः ॥ ४ ॥ तत्पुत्रोनंदसावर्णिःकेदारश्चतदात्मजः ॥ सप्तद्वी
पपतिःश्रीमान्केदारोवैष्णवःस्वयम् ॥ ५ ॥ तस्यरक्षानिमित्तेनतत्सभायांसुदर्शनम् ॥ गवांलक्षंनवंशुद्धंस्वर्णशृंगंचभू
षितं ॥ ६ ॥ वन्हिशुद्धानिवस्त्राणिदत्तानिवरुणेनच ॥ सुवर्णानांतथालक्षंसर्वसस्यांवसुंधराम् ॥ ७ ॥ मणिरत्नंचमुक्तांच
हीरकंपरमंतथा ॥ माणिक्यमश्वरत्नानांलक्षंलक्षंचहस्तिनाम् ॥ ८ ॥ रौप्यंप्रवालंमिष्टान्नंशतधान्याचलंवरं ॥ नित्यंनि
त्यंब्राह्मणेभ्योददौचरत्नभूषणं ॥ ९ ॥ शतलक्षंब्राह्मणानांभोजयामासनित्यशः ॥ जलभोजनपात्राणिसुवर्णानांददौ
नृपः ॥ १० ॥ सुवर्णानांयज्ञसूत्रमंगुलीयकमुत्तमं ॥ आसनंस्वर्णरत्नानांब्राह्मणेभ्योददौमुदा ॥ ११ ॥ ब्राह्मणानांचल
क्षंचसूपकारंनृपस्यच ॥ ब्राह्मणानांद्विलक्षंचपरिवेषणकारकम् ॥ १२ ॥ घृतकुल्यामधुकुल्यादधिकुल्यामनोहरः ॥ गुड
कुल्यादुग्धकुल्यानित्यंप्रार्थनमीप्सितम् ॥ १३ ॥ प्रातरारभ्यसंध्यांतंविप्राणांभोजनंतथा ॥ दुःखिनांभिक्षुकाणांचधनदानं

यथोचितम् ॥ १४ ॥ फलमूलाशनोराजावैष्णवश्चजितेंद्रियः ॥ सर्वमदर्पणंकृत्वाजपेन्मांचदिवानिशम् ॥ १५ ॥ एकदा सूपकारश्चतमुवाचनृपेश्वरम् ॥ विप्राणांभोजनायैवदशलक्षमुपस्थितम् ॥ १६॥ भुंजतेब्राह्मणाश्चाद्यरुक्षमन्नंवदप्रभो॥ कुर्वंतुभक्षणंतेवैविप्राःसूपादिनानृप ॥ १७ ॥ चतुर्योजनपर्यंतमधिकारंनृपस्यच ॥ योराजातच्छतगुणःसएवमंडलेश्वरः ॥ १८ ॥ तत्तद्दशगुणोराजाराजेंद्रःपरिकीर्तितः ॥ राजेंद्राणांपंचलक्षंनित्यंकेदारसंसदि ॥ १९ ॥ अमूल्यरत्नमाणिक्यंमुक्ताहारंमणीश्वरम् ॥ गजरत्नमश्वरत्नंकेदारायकरंददौ ॥२०॥ कमलाकलयाजातायज्ञकुंडसमुद्भवा ॥ वन्हिशुद्धांशुकाधानारत्नभूषणभूषिता ॥ २१ ॥ कामुकीकामिनीश्रेष्ठाकल्पाकमललोचना ॥ कन्यास्मितेमहाराजेत्युवाचनृपतिंचसा ॥ ॥ २२ ॥ राजासंपूज्यतांभक्त्यातस्यैपत्नींसमर्प्यच ॥ साविज्ञायप्रसूतातंकृत्वाचविनयंमुदा ॥ २३ ॥ ययौपुण्यवनंरम्यं तपसेयमुनांतिकं ॥ तत्तपस्यावनंयस्मात्तस्माद्वृंदावनंस्मृतम् ॥ २४ ॥ तपसावरयामासमांवरंचवरंवरम् ॥ ब्रह्मादददौवरंतस्यैपश्चात्कृष्णंलभिष्यसि ॥ २५ ॥ साचैकदानदीतीरेवसंतेसस्मितासती ॥ शयानापुष्पशय्यायांरत्नाभरणभूषिता ॥ ॥ २६ ॥ ब्रह्मापरीक्षितुंतांचसाध्वींचसुमनोहराम् ॥ ददर्शकन्यारहसियुवानंपुरुषंपरम् ॥ २७ ॥ चंदनोक्षितसर्वांगंरत्नभूषणभूषितं ॥ सस्मितंकामुकंरम्यंरमणीनांचवांछितम् ॥ २८ ॥ यथाषोडशवर्षीयंकुमारंकनकप्रभम् ॥ कोटिकंदर्पलीलाभंपीतांबरधरंवरम् ॥ २९ ॥ शरत्पार्वणचंद्रास्यंशरत्पद्मसुलोचनम् ॥ दृष्ट्वातंचसमुत्थायवासयामाससन्निधौ ॥३०॥ पूजांचकारभक्त्याचफलंमूलंददौमुदा ॥ सुवासितंजलंदत्वाप्रणनाममुदान्विता ॥ ३१ ॥ पूजांगृहीत्वामुदितःसादरंतामुवाचह ॥ विप्ररूपीचभगवान्प्रज्वलन्ब्रह्मतेजसा ॥ ३२ ॥ कामुकीनांचकाम्यंचसतीनांदुष्करंव्रज ॥ ॥ धर्मउवाच ॥

भवती कस्य कन्या वा किं ते नाम मनोहरे ॥ ३३ ॥ किं करोषि रहस्ये वतन्मे कथितुमर्हसि ॥ कस्य हेतोस्तपस्याते किं वा वांच्छ
सि सुंदरि ॥ ३४ ॥ वरं वृणीष्व भद्रं ते यत्ते मनसि वांछितम् ॥ ॥ वृंदोवाच ॥ ॥ विप्र केदारकन्याहं वृंदा वृंदावने स्थिता ॥ ३५ ॥
तपः करोमि रहसि चिंतयामि हरिं पतिम् ॥ यदि दातुं समर्थोसि देहि मे वांछितं वरम् ॥ ३६ ॥ असमर्थोसि चेद्गच्छ किं ते प्रश्नेन ब्रा
ह्मण ॥ ॥ धर्म उवाच ॥ ॥ निरीहमवितर्क्यं च परमात्मानमीश्वरम् ॥ ३७ ॥ निर्गुणं च निराकारं भक्तानुग्रहविग्रहं ॥ काक्ष
मातं पतिं कर्तुं विना लक्ष्मीं सरस्वतीम् ॥ ३८ ॥ चतुर्भुजस्य द्वे भार्ये हरेर्वैकुंठशायिनः ॥ गोलोके द्विभुजस्यापि श्रीवंशीवद
नस्य च ॥ ३९ ॥ किशोरगोपवेषस्य परिपूर्णतमस्य च ॥ तस्य भार्या स्वयं राधा महालक्ष्मीः परात्परा ॥ ४० ॥ ब्रह्मस्वरू
पा परमा परमात्मानमीश्वरम् ॥ भजते सततं शांतं सुरम्यं श्यामसुंदरम् ॥ ४१ ॥ कोटिकंदर्पसौंदर्यनिंदितं सुकलेवरम् ॥ अमू
ल्यरत्नाभरणं सत्यं च नित्यविग्रहम् ॥ ४२ ॥ पीतांबरधरं रम्यं दातारं सर्वसंपदाम् ॥ श्रीकृष्णश्च द्विधा रूपो द्विभुजश्च चतुर्भुजः
॥ ४३ ॥ चतुर्भुजश्च वैकुंठे गोलोके द्विभुजः स्वयम् ॥ यन्निमेषो भवेद्दैवे ब्रह्मणः पतनेन च ॥ ४४ ॥ पंचविंशत्सहस्रेण युगेनें
द्रस्य पातनम् ॥ चतुर्दशेंद्रावच्छिन्नकालेन ब्रह्मणो दिनम् ॥ ४५ ॥ तावती तिनिशा तस्य विधातुर्जगतामपि ॥ एवं त्रिंश
द्दिनै मासं द्विषट्के मासि वर्षकं ॥ ४६ ॥ एवं शतायुस्तस्यैव निबोध बोधतत्परम् ॥ यावज्जीवनपर्यंतं सेवंते सनकादयः ॥ ४७ ॥
कल्पानां कोटिकोटिं च तन्न साध्यश्च यो विभुः ॥ सहस्रवक्त्रः शेषश्च सेवते च जपेत्सदा ॥ ४८ ॥ दिवानिशं च यं भक्त्या कल्पको
टिशतं शतं ॥ तन्न साध्यो हितकरो दुराराध्यः परात्परः ॥ ४९ ॥ ब्रह्मा ब्रह्मस्वरूपं तं भजे जन्मनि जन्मनि ॥ वक्त्रैश्चतुर्भिः सततं
स्तौति नित्यं सनातनं ॥ ५० ॥ वेदे निर्वचनीयश्च वेदानां जनको विधिः ॥ विधाता फलदाता च दाता च सर्वसंपदाम् ॥ ५१ ॥ त

न्नसाध्योहिभगवान्कालकालांतकांतकः॥ संहारकर्त्ताजगतांकलयारुद्ररूपतः॥५२॥सस्तौतिपंचवक्त्रेणकोन्योन्यस्या
पिकाकथा ॥ तत्परश्चप्रियोनास्तिवंदेभगवतःशृणु ॥ ५३ ॥ सर्वशक्तिस्वरूपासादुर्गादुर्गतिनाशिनी ॥ ब्रह्मस्वरूपापर
मामूलप्रकृतिरीश्वरी ॥ ५४ ॥ नारायणीविष्णुमायावैष्णवीसासनातनी ॥ यन्माययाजगद्भ्रांतमनित्येभ्रमतेसदा ॥
॥५५॥ सास्तौतिभक्त्यायंदेवंवंदेप्यंगेदिवानिशं ॥ स्तौतिभक्त्यास्वशक्त्याचगजवक्त्रःषडाननः ॥ ५६ ॥ ध्यायतेयंगणे
शश्चसर्वादौयस्यपूजनम् ॥ भगवान्सर्वदेवेशोज्ञानिनांचगुरोर्गुरुः ॥ ५७ ॥ सिद्धेंद्रेषुचदेवेंद्रेयोगींद्रेज्ञानिनांगुरौ ॥ नग
णेशात्परोविद्वान्गणेशश्चसुराधिपः ॥५८॥ सरस्वतीचयंस्तोतुमशक्तापरमेश्वरी ॥ दिवानिशंपादपद्मंभक्त्यापद्मांनसेव
ते ॥ ५९ ॥ यत्कटाक्षाज्जगत्सर्वंपरिपूर्णतमंशिवम् ॥ यद्भयाद्वातिवातोयंसूर्यस्तपतियद्भयात् ॥ ६० ॥ वर्षतींद्रोदहत्य
ग्निर्मृत्युश्चरतिजंतुषु ॥ पृथिवीसेवयायस्यसर्वाधारावसुंधरा ॥ ६१ ॥ समुद्रानिश्चलाःशैलायस्यभीताश्चसुंदरि ॥ तीर्थ
साराचसागंगापवित्रामुक्तिदायिनी ॥ ६२ ॥ जगतांपावनीदेवीयस्यपादाब्जसेवया ॥ पवित्रातुलसीदेवीस्मरणाद्य
स्यसेवनात् ॥ ६३ ॥ नवग्रहाश्चदिक्पालाभीतायस्यप्रतापतः ॥ ब्रह्मांडेषुचसर्वेषुब्रह्मविष्णुशिवात्मकाः ॥ ६४ ॥ अन्ये
येयेसुरेशाश्चशेषाद्यामुनयस्तथा ॥ केचित्कलास्वरूपाश्चाप्यंशरूपाश्चकेचन ॥ ६५ ॥ केचित्कलांशाःकृष्णस्यकेचिच्चप
रमात्मनः॥ पतिमिच्छसिकल्याणिप्रकृतेःपरमीश्वरं ॥ ६६ ॥ गोलोकेराधिकासाध्योनान्येषांचकदाचन ॥ मांभजस्वम
हाभागेनृपाणामीश्वरंपतिम् ॥ ६७ ॥ बलवंतंचदेवेभ्योदैत्येभ्यश्चवरानने ॥ सुखानियानिकल्याणित्रिषुलोकेषुसंतिवै
॥ ६८ ॥ भुंक्ष्वतान्येवसर्वाणिमत्प्रसादान्नसंशयः ॥ सप्तसागरपारेचकांचनीरुचिरावरे ॥ ६९ ॥ देवानांक्रीडनार्थायवि

धात्रानिर्मितापुरी ॥ तत्रैवगच्छभद्रंतेरमरामेमयासह ॥ ७०॥ महेंद्रस्यप्रियवनंपुष्पोद्यानसमन्वितम् ॥ गच्छस्वर्णमयीं
लंकांनानारत्नविभूषितां ॥ ७१ ॥ तत्रैवगच्छभद्रंतेरमरामेमयासह ॥ विस्पंदकंसुवसनंनंदकंपुष्पभद्रकं ॥ ७२ ॥ तत्रैव
गच्छभद्रंते० ॥ सुमेरुगह्वरंवापिक्षीरोदंवामनोहरम् ॥ ७३ ॥ तत्रैव०॥ सत्यलोकंब्रह्मलोकंरम्यंसद्मरहस्थलं ॥ ७४॥ त
त्रैव०॥ मलयंनिलयंरम्यंमहेंद्रसारनिर्मितं ॥ ७५॥ सुगंधियुक्तंसततंशुद्धंचंदनवायुना ॥ मालतीयूथिकारम्याकेतकी
माधवीतथा ॥ ७६ ॥ चारुचपकपुष्पाणांगंधेनसुमनोहरं ॥ तत्रैव० ॥ ७७॥ पिकानांभ्रमराणांचमधुरध्वनिसंयुतम् ॥
तत्रैव० ॥ ७८ ॥ इंद्रस्यवरुणस्यैववायोरवियमस्यच ॥ धनेश्वरस्यवन्हेश्चधर्मस्यशशिनस्तथा ॥ ७९ ॥ सुरम्यंलोक
मेतेषांमध्येदेवियथेच्छसि ॥ तत्रैव० ॥ ८० ॥ रत्नद्वीपंमणिद्वीपंरम्यंचंद्रसरोवरम् ॥ तत्रैवगच्छभद्रंते०॥ ८१॥ इत्येवमु
क्तासंभोक्तुंगच्छतंतंछलेनच ॥ नवास्तवपरीक्षार्थंसतीत्वंबोधितुंव्रज ॥ उवाचसानृपसुताकोपवक्रास्यलोचना ॥ ८२ ॥
हितंसत्यंयोगयुक्तंधर्मार्थंचयशस्करं ॥ ॥ श्रीवृंदोवाच ॥ ॥ धैर्यंकुरुमहाभागश्रेष्ठोजातिषुब्राह्मणः ॥ ८३ ॥ ब्राह्मणा
नांतपोमूलंसत्यंवेदव्रतंधृतिः ॥ परस्त्रीसहसंभोगःस्वभावश्चाप्यधर्मिणां ॥ ८४ ॥ अधर्मेणैवहेविप्रदुष्टोभद्राणिपश्य
ति ॥ ततःसपत्नेजयतिसमूलस्थोविनश्यति ॥ ८५ ॥ पतिव्रतानांगमनेबलात्कारेणनिश्चितम् ॥ मातृगामीभवेत्सद्योब्र
ह्महत्याशतंभवेत् ॥ ८६ ॥ कुंभीपाकेपच्यतेचयावच्चंद्रदिवाकरौ ॥ प्रदग्धस्तैलतप्तेपुनम्र्तःसूक्ष्मदेहतः ॥ ८७॥ ताडि
तोयमदूतैश्चलोहदंडेनमूर्धनि ॥ क्षणंसुखंचिरंदुःखंसर्वनाशस्यकारणम् ॥ ८८ ॥ अगम्यागमनंदुःखंधर्मिष्ठोनैववांछ
ति ॥ क्षमस्वगच्छभद्रंतेब्राह्मणज्ञानदुर्बलः ॥ ८९ ॥ यथादीपशिखांदृष्ट्वाकीटःपततिनिश्चितम् ॥ मिष्टंदृष्ट्वाबडीशाग्रेलु

ध्यमीनोमृगोयथा ॥ १० ॥ यथाविषाक्तंभक्ष्यंचभुंक्तेभोक्ताबुभुक्षितः ॥ गृह्णातिदुष्टोदुष्टंचविषकुंभंपयोमुखं ॥ ११ ॥
तथादृष्ट्वापरस्त्रीणांमुखपद्मंमनोहरम् ॥ विनाशबीजंमोहेनभ्रांतोभवतिलंपटः ॥ १२ ॥ मुखंचरुधिरैस्त्रीणांश्रोणीयुग्मं
स्तनंतथा ॥ कामाधारंनाशबीजमधर्मस्थलमेवच ॥ १३ ॥ भगंनरककुंडंचलालामूत्रसमन्वितं ॥ दुर्गंधियुक्तंपापंचय
मदंडस्यकारणम् ॥ १४ ॥ यथालिंगंविशत्येवपापयोनौचयोषिताम् ॥ तथापुमान्विशत्येवरौरवेचयुगेयुगे ॥ १५ ॥ र
हस्यंचापदंदृष्ट्वामांत्वंधर्षितुमिच्छसि ॥ अत्रैबसर्वदेवाश्चलोकपालाश्चब्राह्मण ॥ १६ ॥ जाज्वल्यमानोधर्मश्चसाक्षीशा
स्ताचकर्मणाम् ॥ यमश्चदंडकर्ताचस्थापितोहरिणास्वयम् ॥ १७ ॥ स्वयंकृष्णश्चधर्मात्माज्ञानरूपोमहेश्वरः ॥ दुर्गाबु
द्धिर्मनोब्रह्माचेंद्रियाणिसुरास्तथा ॥ १८ ॥ सर्वप्राणिषुतिष्ठंतिसाक्षिणःकर्मणांद्विज ॥ क्वगुप्तंकरहस्यंवाब्राह्मणज्ञान
दुर्बल ॥ १९ ॥ क्षमस्वगच्छभद्रंतेअवध्याश्चद्विजातयः ॥ शक्ताहंभस्मसात्कर्तुंगच्छवत्सयथासुखम् ॥ १०० ॥ तपस्या
सुममगतमष्टोत्तरशतंयुगम् ॥ नास्तिगोत्रंमत्पितुश्चनमातानपितामम ॥ १ ॥ सर्वांतरात्माभगवान्कृष्णोरक्षतिमांद्विज ॥
कृष्णेनस्थापितोधर्मोमांचरक्षतिनित्यशः ॥ २ ॥ आदित्यश्चतथाचंद्रःपवनश्चहुताशनः ॥ ब्रह्माशंभुर्भगवतीदुर्गारक्षतिमांस
दा ॥ ३ ॥ येनशुक्लीकृताहंसाःशुकाश्चहरिताःकृताः ॥ मयूराश्चित्रितायेनसमेरक्षांकरिष्यति ॥ ४ ॥ अनाथबालवृद्धानांरक्ष
काःसर्वदेवताः ॥ नारीबुद्ध्यानमांधर्मस्त्यक्त्वागच्छेद्विसर्वदा ॥ ५ ॥ मांमातरंपरित्यज्यगच्छवत्सयथासुखं ॥ इत्येवमुक्त्वा
देवीसातस्थौतत्रधरायथा ॥ ६ ॥ आगच्छंतंचसंभोक्तुंमायातंबोधनेनच ॥ शशापेतिचसाकोपाद्ब्रह्मबंधोक्षयोभव ॥ ७ ॥
क्षयोभवदुराचारहेपापिष्ठक्षयोभव ॥ पुनःशप्तुंस्वयंसूर्योवारयामासयत्नतः ॥ ८ ॥ एतस्मिन्नंतरेतातत्रैवजगदीश्वराः ॥

आजग्मुरतिसंत्रस्ताब्रह्मविष्णुशिवादयः ॥ ९ ॥ धर्मंदृष्ट्वाकलारूपंरुरुदुस्त्रिदशेश्वराः ॥ कृत्वाक्रोडेतीवकृशंकुल्हांभीतंयथा
विधुम् ॥ १० ॥ निश्श्लेष्टमलिनंदग्धंसतीकोपाग्निनाव्रज ॥ श्रीभ० ॥ क्षमस्ववृंदेमद्भक्तेजन्ममृत्युजराहरे ॥ ११ ॥ धर्मंजीवय
मद्भक्तंरक्षधर्मपतिव्रते ॥ ॥ ब्रह्मोवाच ॥ ॥ ध्वांतपूर्णंजगत्सर्वंविनाधर्मंचभूवह ॥ कंपितौचंद्रसूर्यौचशेषश्चापिवसुंधरा
॥ १२ ॥ महादेवउ० ॥ ॥ प्रनष्टंचजगत्सर्वंविनाधर्मेणसुंदरि ॥ धर्मंजीवयभद्रंतेस्वस्तितेस्तुवरानने ॥ १३ ॥ सूर्यउ० ॥ व
रंवृणीष्वभद्रंतेयत्तेमनसिवांछितम् ॥ धर्मंजीवयभद्रंतेरक्षसृष्टिपतिव्रते ॥ १४ ॥ अनंत० ॥ ॥ धर्मंकरोषितपसाकथंधर्मं
विहंसिच ॥ धर्मंजीवयभद्रंतेसर्वधर्मोभवेत्तव ॥ १५ ॥ चंद्रउवा० ॥ ॥ द्विजरूपधरोधर्मस्त्वांपरीक्षितुमागतः ॥ ब्रह्मणाप्रे
रितश्चैवनिर्दोषश्चविहिंसितः ॥ १६ ॥ महेंद्रउवा० ॥ तपसोपार्जितोधर्मोधर्मेणचफलंनृणां ॥ कथंफलंचतपसांयदिधर्मःश
यंगतः ॥ १७ ॥ वरुण० ॥ धर्मंजीवयधर्मिष्ठेधर्मंरक्षसनातनं ॥ निष्फलंकर्मिणांकर्मविनाधर्मेणधार्मिके ॥ १८ ॥ पवन० ॥
जगत्पूतंकुरुशुभेधर्मंजीवयसांप्रतम् ॥ धर्मेप्रनष्टेतपसांतवापूर्वंविनंक्ष्यति ॥ १९ ॥ वह्निरुवाच ॥ ॥ स्वधर्मोपार्जनं
कर्तुमागतासिचभारतम् ॥ विहंसिधर्ममज्ञात्वापुनर्जीवयसुंदरि ॥ २० ॥ ॥ यमउवाच ॥ ॥ वेदोक्तकर्मकर्तृणामहंवि
श्वेवरानने ॥ धर्मानुसारात्फलदोधर्मंजीवयसत्वरं ॥ २१ ॥ देवानांवचनंश्रुत्वासमुत्थायपतिव्रता ॥ नमस्कृत्यसुरेशांश्च
तानुवाचतपस्विनी ॥ २२ ॥ वृंदोवाच ॥ ॥ अहंदेवनजानामिधर्मंब्राह्मणरूपिणम् ॥ कृतःक्षयोमयाकोपान्मांपरीक्षि
तुमागतः ॥ जीवयामिध्रुवंधर्मंयुष्माकंचप्रसादतः ॥ २३ ॥ इत्येवमुक्त्वासावृंदाचेत्युवाचव्रजेश्वर ॥ तपःसत्यंयदिमम
सत्यंचविष्णुपूजनं ॥ २४ ॥ तेनपुण्येनसद्योत्रद्विजोभवतुविज्वरः ॥ यदिमेचभवेत्सत्यव्रतंसत्यंतपःशुचिः ॥ २५ ॥ तेनपु

ण्येनसत्येनद्विजोभवतुविज्वरः ॥ यदिनारायणःसत्यःसर्वात्मानित्यविग्रहः ॥ २६ ॥ ज्ञानात्मकःशिवःसत्योद्विजोभव
तुविज्वरः ॥ ब्रह्मसत्यंचतेदेवाःप्रस्थितिःपरमायदि ॥ २७ ॥ यज्ञःसत्यस्तपःसत्यंद्विजोभवतुविज्वरः ॥ इत्येवमुक्त्का
सावृंदाधर्मक्रोडेचकारसः ॥ २८ ॥ तंदृष्ट्वाचकलारूपंरुरोदकृपयासती ॥ एतस्मिन्नंतरेमूर्त्तिर्धर्मभार्याशुचाकुला ॥ २९ ॥
निपत्यविष्णुपादेचशिरसाचेत्युवाचसा ॥ मूर्त्तिरुवा० ॥ हेनाथकरुणासिंधोदीनबंधोकृपांकुरु ॥ ३० ॥ तूर्णंजीवयकांतं
मेजगन्नाथकृपामय ॥ पतिहीनाचयानारीपापिनीसाभवार्णवे ॥ यथास्यंचक्षुर्विरतंप्राणहीनायथातनूः ॥ ३१ ॥ मितंद
दातिहिपितामितंभ्रातामितंसुतः ॥ मितंबंधुर्मितंमातासर्वदातापतिःप्रभुः ॥ ३२ ॥ इत्येवमुक्त्कासादेवीतत्रतस्थौरुरोद
च ॥ उवाचवृंदांभगवान्सर्वात्माप्रकृतेःपरः ॥ ३३ ॥ श्रीभगवानुवाच ॥ ॥ त्वयायुस्तपसालब्धंयावदायुश्चब्रह्मणः ॥
तदेवदेहिधर्मायगोलोकंगच्छसुंदरि ॥ तन्वानयाचतपसापश्चान्मांचलभिष्यसि ॥ ३४ ॥ पश्चाद्गोलोकमागत्यवाराहेचव
रानने ॥ वृषभानसुतात्वंचराधाछायाभविष्यसि ॥ १३५ ॥ मत्कलांशश्चरापाणस्त्वांविवाहेग्रहिष्यति ॥ मांलभिष्यसि
रासेचगोपीभीराधयासह ॥ ३६ ॥ राधाश्रीदामशापेनवृकभानसुतायदा ॥ साचैववास्तवीराधात्वंचछायास्वरूपिणी
॥ ३७ ॥ विवाहकालेरापाणस्त्वांचछायांग्रहिष्यति ॥ त्वांदत्वावास्तवीराधासांतर्धानाभविष्यति ॥ ३८ ॥ राधेवेतिविमूढा
श्चविज्ञास्यंतिचगोकुले ॥ स्वप्नेराधापदांभोजंनहिपश्यंतिबल्लवाः ॥ ३९ ॥ स्वयंराधाममक्रोडेछायारापाणकामिनी ॥ वि
ष्णोश्चवचनंश्रुत्वाददावायुश्चसुंदरि ॥ ४० ॥ उत्तस्थौपूर्णधर्मश्चतप्तकांचनसन्निभः ॥ पूर्वस्मात्सुंदरःश्रीमान्प्रणनामपरा
त्परं ॥ ४१ ॥ वृंदोउवाच ॥ देवाःशृणुतमद्वाक्यंदुर्लंघ्यंसावधानतः ॥ नहिमिथ्याभवेद्वाक्यंमदीयंचनिशामय ॥ १४२ ॥

क्षयोभवेतिवाक्यंचमयोक्तंकोपभीतया ॥ वारत्रयंपुनर्वक्तुंवारयामासभास्करः ॥४३॥ सत्येचपरिपूर्णोयंयथापूर्वोयथा
धुना ॥ त्रिपादश्चापित्रेतायांद्विपादोद्वापरेतथा ॥४४॥ एकपादश्चधर्मोयंकलेश्चप्रथमेहरेः ॥ शेषःकलाषोडशांशःपुनःसत्येय
थापुरः ॥४५॥ त्रिर्निर्गतंमममुखात्क्षयस्तेनततःक्रमात् ॥ पुनरुक्तेचमनसिवारयामासभास्करः ॥ ४६॥ तेनैवहेतुनायंचक
लिशेषेकलामयः ॥ तथाशप्तःस्थितोदुर्गेकलिशेषेतथाध्रुवं ॥४७॥ एतस्मिन्नंतरेनंददद्दृशुर्देवतारथं ॥ गोलोकादागतंवेगा
दतीवसुंदरंशुभं ॥४८॥ अमूल्यरत्ननिर्माणंहीरहारपरिष्कृतं ॥ मणिमाणिक्यमुक्ताभिर्वस्त्रैश्चश्वेतचामरैः ॥४९॥ विभूषि
तंभूषणैश्चरुचिरैरत्नदर्पणैः ॥ नत्वाहरिंहरंवृंदाब्रह्माणंसर्वदेवताः ॥ ५० ॥ समारुह्यरथंदृष्ट्वागोलोकंचजगामसा ॥ देवा
जग्मुश्चस्वस्थानंकिंभूयःश्रोतुमिच्छसि ॥ १५१॥ ॥ इतिश्रीब्र० महापुरा० श्रीकृ० भगवन्नंदसंवादेषडशीतितमोऽध्यायः
॥८६॥ नंदउ०॥ त्वांज्ञातुंनहिशक्ताश्चवेदावेदप्रभुंस्वयं ॥ सुराब्रह्मेशशेषाद्यामुनिसिद्धादयस्तथा ॥ १ ॥ कोभवानितिवि
ज्ञातुंपरंकौतूहलंमम ॥ तत्सर्वंस्वात्मयाथार्थ्यंनिर्जनेकथयप्रभो ॥ २॥ श्रीनारायणउ०॥ एतस्मिन्नंतरेतत्रकृष्णंद्रष्टुंमुनी
श्वराः ॥ आजग्मुःसहसावत्सज्वलंतोब्रह्मतेजसा ॥ ३ ॥ पुलहस्त्यपुलस्त्यश्चक्रतुश्चभृगुरंगिराः ॥ प्रचेताश्चवसिष्ठश्चदुर्वा
साःकण्वएवच ॥४॥ कात्यायनःपाणिनिश्चकणादोगौतमस्तथा ॥ सनकश्चसनंदश्चतृतीयश्चसनातनः ॥ ५॥ कपिलश्चासु
रिश्चैववायुःपंचशिखस्तथा॥ विश्वामित्रोवाल्मिकिश्चकश्यपश्चपराशरः॥६॥ विभांडकोमरीचिश्चशुक्रोत्रिश्चबृहस्पतिः॥
गार्ग्यश्चापितथावात्स्योव्यासश्चजैमिनिस्तथा॥७॥ मितवाक्ऋष्यशृंगश्चयाज्ञवल्क्यःशुकस्तथा॥ सौभरिःशुद्धजटिलो
भरद्वाजःसुभद्रकः॥८॥ मार्कंडेयोलोमशश्चआसुरिश्चविटंकणः॥अष्टावक्रःशतानंदोवामदेवश्चभागुरिः ॥९॥ संवर्त्तश्चाप्यु

तथ्यश्चनरोहंचापिनारदः॥ जाबालिःपरशुरामश्चाप्यगस्त्यःपैलएवच॥१०॥ युधामन्युर्गौरमुखोप्युपमन्युःश्रुतश्रवाः॥ मैत्रेयश्चवनश्चैववररुच्यर्षिरेवच॥११॥ तांदृष्ट्वासहसोत्थायनमस्कृत्यपुटांजलिः॥ सिंहासनेषुरम्येषुवासयामाससादरं॥१२॥ पूजयामासविधिवत्कुशलप्रश्नपूर्वकम्॥ परस्परंचसंभाष्यमध्येकृष्णउवाससः॥१३॥ एतस्मिन्नंतरेकृष्णस्तेजोराशिंददर्शसः॥ ददृशुस्तेचमुनयोप्याकाशेचततोज्वलम्॥१४॥ तेजसोभ्यंतरेवत्सकुमारंकनकप्रभम्॥ यथैवंपंचवर्षीयंनग्नंबालकमीप्सितम्॥१५॥ आविर्बभूवसहसासभामध्येचनारद॥ उत्तिष्ठमानंसहसातंदृष्ट्वामुनिपुंगवाः॥१६॥ प्रणेमुर्मुनयःसर्वेशौरिश्चप्रणनामतम्॥ सस्मितंस्निग्धनेत्रंचकृत्वायुक्तिंचसादरम्॥१७॥ ससर्वानाशिषंकृत्वासमुवासचसंसदि॥ उवाचतांश्चशौरिंचभगवंतंसनातनम्॥१८॥ सनत्कुमारउवाच॥ ॥भद्रंबोमुनयःशश्वत्तपसांफलमीप्सितम्॥ कृष्णस्यकुशलप्रश्नंशिवबीजस्यनिष्फलम्॥१९॥ सांप्रतंकुशलंवश्चदर्शनंपरमात्मनः॥ भक्तानुरोधाद्देहस्यपरस्यप्रकृतेरपि॥२०॥ निर्गुणस्यनिरीहस्यसर्वबीजस्यतेजसः॥ भारावतरणायैवचाविर्भूतस्यसांप्रतम्॥॥२१॥ श्रीकृष्णउवाच॥ ॥शरीरधारिणश्चापिकुशलप्रश्नमीप्सितम्॥ तत्कथंकुशलप्रश्नंमयिविप्रनविद्यते॥२२॥ सनत्कुमारउवाच॥ शरीरेप्राकृतेनाथसंततंचशुभावहम्॥ नित्यदेहेक्षेमबीजेशिवप्रश्नमनर्थकम्॥२३॥ श्रीभगवानुवाच॥ ॥योयोविग्रहकारीचसचप्राकृतिकःस्मृतः॥ देहोनविद्यतेविप्रतांनित्यांप्रकृतिंविना॥२४॥ सनत्कुमार० रक्तबिंदूद्भवादेहास्तेचप्राकृतिकाःस्मृताः॥ कथंप्रकृतिनाथस्यबीजस्यप्राकृतंवपुः॥२५॥ सर्वबीजस्यसर्वादिर्भवांश्चभगवान्स्वयं॥ सर्वेषामवताराणांप्रधानंबीजमव्ययं॥२६॥ कृत्वावदंतिवेदाश्चनित्यंनित्यंसनातनम्॥ ज्योतिःस्वरूपं

परमंपरमात्मानमीश्वरं ॥ २७ ॥ माययासगुणंचैवमायेशंनिर्गुणंपरं ॥ प्रवदंतिचवेदांगास्तथावेदविदःप्रभो ॥ २८ ॥ श्री
कृउ० ॥ सांप्रतंवासुदेवोहंरक्तवीर्याश्रितंविभुः ॥ कथंनप्राकृतोविप्रशिवप्रश्नमभीप्सितं ॥ २९ ॥ सनत्कु० ॥ वासुःसर्वनिवा
सश्चविश्वानियस्यलोमसु ॥ तस्यदेवःपरंब्रह्मवासुदेवइतीरितः ॥ ३० ॥ वासुदेवेतितन्नामवेदेषुचचतुर्षुच ॥ पुराणेष्विति
हासेषुयात्रादिषुचदृश्यते ॥ ३१ ॥ रक्तवीर्याश्रितोदेहःकृतेवेदेनिरूपितः ॥ साक्षिणोमुनयश्चैवधर्मःसर्वत्रएवच ॥ ३२ ॥
साक्षिणोममवेदाश्चरविचंद्रौचसांप्रतम् ॥ ॥ भृगुरुवा० ॥ सत्यंवदसिविप्रेंद्रत्वमेववैष्णवाग्रणीः ॥ ३३ ॥ स्वागतंकुशलं
शश्वत्किंनिमित्तमिहागतः ॥ ॥ सनत्कु० ॥ ॥ श्रूयतांमुनयःसर्वेश्रूयतांकृष्णसांप्रतम् ॥ अहोयेननिमित्तेनचातिशीघ्रमिहा
गतः ॥ ३४ ॥ श्रीकृष्णउ० ॥ ॥ भगवन्सर्वधर्मज्ञकिन्निमित्तमिहागतः ॥ सर्वंजानासिसर्वज्ञत्वमेवविदुषांवर ॥ ३५ ॥ सन
त्कु० ॥ ॥ धन्योसिभगवन्शश्वन्मान्योसिजगतामपि ॥ सर्वेश्वरेश्वरोसित्वंत्वत्परोनास्तिविश्वतः ॥ ३६ ॥ श्रीकृष्ण० ॥
यज्ञानांचव्रतानांचतपस्यानांद्विजेश्वर ॥ सततंफलदाताहंदक्षिणाभिःसहेतिच ॥ ३७ ॥ इतिश्रुत्वाकुमारश्चजवेनप्रय
यौचते ॥ मत्वाश्चर्यंचवचनंवारयामासतेपितं ॥ ३८ ॥ ॥ ऋषयऊचुः ॥ ॥ हेसिद्धेंद्रमहाभागकुमारकरुणामय ॥ काशं
कितकथाप्रोक्ताभगवत्कृष्णसंनिधौ ॥ ३९ ॥ किंपुत्रदृष्टमाश्चर्यंश्रुतंकिमपिकुत्रचित् ॥ अतीवकृत्वाविस्तीर्णमस्माकंव
क्तुमर्हसि ॥ ४० ॥ एतस्मिन्नंतरेब्रह्मापार्वत्यासहशंकरः ॥ अनंतश्चापिधर्मश्चश्रीसूर्यश्चनिशाकरः ॥ ४१ ॥ आदित्यावस
वोरुद्रादिक्पालाद्याश्चदेवताः ॥ श्रीकृष्णंसहसोत्थायसंभाव्यचपृथक्पृथक् ॥ ४२ ॥ मधुपर्कादिकंदत्वापूजयामासभ
क्तितः ॥ प्रणेमुर्ऋषयःसर्वेशेषंशंभुंविधिंशिवाम् ॥ ४३ ॥ परस्परंचसंभाषाबभूवद्विजदेवयोः ॥ सुमुवासासनेमध्येकुमा

र:कनकप्रभ: ॥ कथांकथितुमारेभेसंसदिद्विजदेवयो: ॥ ४४ ॥ सनत्कुमारउवाच ॥ ॥ मयागतश्चगोलोकेनदृष्टोराधिका
पति: ॥ ततोगतंचवैकुंठेतत्रनास्तिचतुर्भुज: ॥ ४५ ॥ ततोगतश्चक्षीरोदस्तत्रनास्तिहरि:स्वयं ॥ परिश्रांतोविषण्णश्चस्नानं
क्षीरोदधेस्तटे ॥ ४६ ॥ विस्तीर्णबालुकामध्येकच्छप:शतयोजन: ॥ भीतश्चकंपितस्तत्रदृष्टोदु:खीचशुष्कित: ॥ ४७ ॥
नि:सारितोराघवेणमीनेनचमहात्मना ॥ धन्योसीतिमयोक्तश्चनाहंधन्यउवाचस: ॥ ४८ ॥ क्षीरोद:सागरोधन्योजंतवोय
त्रमद्विधा: ॥ मत्तोमहत्तराश्चापित्द्यसंख्याश्चमहामुने ॥ ४९ ॥ भवान्धन्योसिक्षीरोदतेनोक्तोनाहमेवच ॥ धन्यावसुंधरादे
वीयत्रैवसप्तसागरा: ॥ ५० ॥ धन्यासिवसुधेत्युक्तानाहमेवेत्युवाचसा ॥ धन्योनंतोममाधार:कृष्णांशोनागराड्विभु:
॥ ५१ ॥ सहस्रमूर्ध्नांमध्येहंमूर्ध्निशूपचसर्षप: ॥ धन्योसिशेषेत्युक्तोयंधन्योनाहमुवाचवै ॥ ५२ ॥ धन्य:कूर्मोममाधारो
गच्छतत्रैववैमुने ॥ धन्योसिकूर्मेत्युक्तोयंनाहंधन्योस्मिवैमुने ॥ ५३ ॥ वायुनाधार्यमाणोहंमत्तोधन्यतमश्चस: ॥ धन्यो
सीत्युक्त:पवनोधन्योनाहमुवाचस: ॥ धन्यश्चभगवान्ब्रह्माविधाताजगतामपि ॥ ५४ ॥ धन्योसितत्रधाताचधन्योनाह
मुवाचस: ॥ धन्योमहेश्वरोदेवोयोगींद्राणांगुरोर्गुरु: ॥ ५५ ॥ सर्वाराध्य:सर्वपूज्योधर्मरूप:सनातन: ॥ कालकालश्चसंह
र्तास्वयंमृत्युंजय:प्रभु: ॥ धन्योसितत्रशंभुश्चधन्योनाहमुवाचस: ॥ ५६ ॥ सर्वादौपूजनंयस्यज्ञानिनांचगुरोर्गुरु: ॥ धन्यो
गणेश्वरोदेवोदेवानांप्रवर:पर: ॥ ५७ ॥ सिद्धेंद्रेषुमुनींद्रेषुदेवेंद्रेषुश्रुतौश्रुतं ॥ योगींद्रेषुचप्राज्ञेषुनगणेशात्पर:पुमान् ॥ ५८ ॥
निम्नगासुयथागंगातीर्थेषुपुष्करंयथा ॥ वेदप्रणिहितोधर्मोत्द्यधर्मस्तद्विपर्यय: ॥ ५९ ॥ वेदोनारायण:साक्षाद्व्ययंपूज्याव्य
वस्थया ॥ तस्माच्छास्त्राणिसर्वाणिपुराणानिचसंतिवै ॥ ६० ॥ तस्मान्निरूपितोधर्मोचेतिहासश्चसंहिता: ॥ तस्मात्तधन्या

तेवेदावदंत्यत्रमनीषिणः॥६१॥यूयंधन्याश्चमान्याश्चेत्युक्त्वावेदामयाततः॥ ऊचुस्तेनवयंधन्यायज्ञसंघश्चसांप्रतं॥६२॥ वयंव्यवस्थाकर्तारोयज्ञौघःफलदःस्वयम्॥ तस्माद्धन्यःसएवापिगच्छगच्छमहामुने॥६३॥ धन्योसियज्ञसंघोसीत्युक्तस्तत्रमयाविभो॥ ऊचुस्तेनवयंधन्याधन्यंकर्मशुभंमुने॥६४॥शुभकर्मासिधन्यत्वंनाहंधन्यमुवाचतत्॥ कर्मणांफलदातारोकर्महेतुश्चसांप्रतं॥६५॥ धातुर्विधाताभगवान्सर्वादिःसर्वकारकः॥ श्रीकृष्णःपरमात्माचधन्योमान्यश्चनिश्चितं॥६६॥ धर्मालयंततोगत्वानदृष्ट्वाजगदीश्वरं॥ मथुरामागतंद्रष्टुंपरिपूर्णतमंप्रभुं॥६७॥ यज्ञानांतपसांचैवव्रतानांशुभकर्मणां॥ ईश्वरंफलदातारंपरमात्मानमेवच॥६८॥ कारणंकारणानांचब्रह्मादीनांपुरःसरम्॥ धन्योसीतिमयोक्तश्चदक्षिणाभिःसहेतिच॥६९॥ इत्युक्तेनभगवताकथितंसर्वकारणं॥ दक्षिणाभिश्चफलदोहतयज्ञोह्यदक्षिणः॥७०॥ दक्षिणाविप्रमुद्दिश्यतत्कालेतुनदीयते॥ एकरात्रेव्यतीतेतुतद्दानंद्विगुणंभवेत्॥७१॥ मासेशतगुणंप्रोक्तंद्विमासेतुसहस्रकम्॥ संवत्सरेव्यतीतेतुसदातानरकंव्रजेत्॥७२॥ वर्षाणांचसहस्रंचमूत्रकुंडेनिपत्यच॥ततश्चांडालतांयातिव्याधियुक्तश्चपातकी॥७३॥ दात्रानदीयतेदानंगृहीत्राचेन्नगृह्यते॥उभौतौनरकंप्राप्तौवर्षाणांचसहस्रकं॥७४॥ यजमानश्चचांडालोब्राह्मणस्तत्पुरोहितः॥ व्याधियुक्तावुभौतौचपापिनौकर्मणःफलात्॥७५॥ सर्वेदेवाश्चमुनयोजहसुर्विस्मयंययुः॥ विस्मयंचययौनंदस्तत्याजपुत्रभावकं॥७६॥ रुरोदचसभामध्येलज्जाहीनःशुचाकुलः॥ त्यजमोहमितीत्युक्त्वाबोधयामासपार्वती॥७७॥ श्रीनंदउ०॥ अमूल्यरत्नंमाणिक्यंयथाकुजन्मनोगृहे॥ स्थितंतेनचदेवेशतथाहंवंचितःप्रभो॥७८॥ ममापराधंभगवन्क्षमस्वप्रकृतेःपरः॥ यास्यामिनपुनर्गेहंगोकुलंयमुनातटं॥७९॥ वृंदावनंतथावासंक्रीडावासंगदाग्र

ज ॥ तत्सर्वंचयशोदायागोपिकांतिकमेवच ॥ ८०॥ किंब्रवीमियशोदांचप्रेयसींराधिकामपि ॥ प्रेमपात्रंचबालौघंवद
भोकथयामिकिं ॥ ८१ ॥ इत्युक्त्वाचसभामध्येमूर्छांसंप्रापनारद ॥ क्रोडेकृत्वाजगन्नाथोबोधयामासतत्क्षणम् ॥ ८२ ॥
इतिश्रीब्रह्मवैवर्तेमहापुराणेश्रीकृष्ण० भगवन्नंदसंवादेसप्ताशीतितमोऽध्यायः ॥ ८७॥ श्रीकृष्ण० ॥ चेतनंकुरुहेतातहे
तातचेतनंकुरु ॥ जलबुद्बुदवत्सर्वंसंसारंसचराचरम् ॥ १ ॥ त्यजमोहंमहाभागमायांस्तौहिपरात्पराम् ॥ ब्रह्मस्वरूपांप
रमांसर्वमोहनिकृंतनीम् ॥ २ ॥ मुक्तिप्रदांमहाभागांविष्णुमायांसनातनीम् ॥ त्रिपुरस्यवधेघोरेमहायुद्धेभयाकुले ॥ ३ ॥
येनस्तोत्रेणशंभुश्चतयादैत्यंजघानसः ॥ स्तोत्रराजंप्रदास्यामिसर्वमोहनिकृंतनं ॥ ४ ॥ सर्ववांछाप्रदनंदश्रूयतामत्रसंस
दि ॥ श्रीनंदउ० ॥ सर्वविघ्नविनाशायदुःखप्रशमनायच ॥ ५ ॥ विभूतयेचयशसेनृणांवांछितसिद्धये ॥ स्तोत्रमेकंमहादे
व्याजगन्मातुर्जगत्प्रभो ॥ ६ ॥ परंदुर्गतिनाशिन्यागोपनीयंसुदुर्लभम् ॥ देहिमह्यंविनीतायभक्तायभक्तवत्सल ॥ ७ ॥ वे
दानांजनकस्त्वंचनिर्गुणश्चपरात्परः ॥ श्रीभग० ॥ शृणुवक्ष्यामिवैश्येंद्रस्तोत्रंयत्परमाद्भुतम् ॥ सर्वविघ्नविनाशार्थंमोह
पाशनिकृंतनं ॥ रणत्रस्तेनविभुनाशंकरेणपुराकृतं ॥ ९ ॥ नारायणोपदेशेनप्रेरितेनचब्रह्मणा ॥ शत्रुग्रस्तंशिवंदृष्ट्वासब्र
ह्माणमुवाचह ॥ १० ॥ उवाचशंकरंब्रह्मारथस्थंपतितंरणे ॥ शूरसंकटशांत्यर्थंदुर्गांदुर्गतिनाशिनीम् ॥ ११ ॥ मूलप्रकृ
तिमाद्यांतांस्तौहिब्रह्मस्वरूपिणीम् ॥ हरिणाप्रेरितोहंचत्वांवदामिसुरेश्वर ॥ १२ ॥ विनाशक्तिसहायेनकोवाकंजेतुमी
श्वरः ॥ ब्रह्मणश्चवचःश्रुत्वादुर्गांसस्मारशंकरः ॥ १३ ॥ पुटांजलिपरोभूत्वाभक्तिनम्रात्मकंधरः ॥ स्नातःपादौचप्रक्षाल्य
धृत्वाधौतेचवाससी ॥ १४ ॥ आचांतःकुशहस्तश्चशुचिर्विष्णुंचसंस्मरन् ॥ ॥ श्रीमहादेवउवाच ॥ ॥ रक्षरक्षमहादेविदुर्गे

दुर्गतिनाशिनी ॥ १५ ॥ मांभक्तमनुरक्तंचशत्रुग्रस्तेकृपामयि ॥ विष्णुमायेमहाभागेनारायणिसनातनि ॥ १६ ॥ ब्र
ह्मस्वरूपेपरमेनित्यानंदस्वरूपिणि ॥ त्वंचब्रह्मादिदेवानामंबिकेजगदंबिके ॥ १७ ॥ त्वंसाकारेचगुणतोनिराकारेच
निर्गणात्॥माययापुरुषस्त्वंचमाययाप्रकृतिःस्वयम् ॥ १८ ॥ तयोःपरंब्रह्मपरंत्वंबिभर्षिसनातनि ॥ वेदानांजननीत्वंच
सावित्रीचपरात्परा ॥ १९ ॥ वैकुंठेचमहालक्ष्मीःसर्वसंपत्स्वरूपिणी ॥ मर्त्यलक्ष्मीश्चक्षीरोदेकामिनीशेषशायिनः ॥ २० ॥
स्वर्गेषुस्वर्गलक्ष्मीस्त्वंराजलक्ष्मीश्चभूतले॥नागादिलक्ष्मीःपातालेगृहेषुगृहदेवता ॥ २१ ॥ सर्वसस्यस्वरूपात्वंसर्वैश्वर्यवि
धायिनी ॥ रागाधिष्ठातृदेवीत्वंब्रह्मणश्चसरस्वती ॥ २२ ॥ प्राणानामधिदेवित्वंकृष्णस्यपरमात्मनः ॥ गोलोकेचस्वयंरा
धाश्रीकृष्णस्यैववक्षसि॥ २३ ॥ गोलोकाधिष्ठितादेवीवृंदावनवनेवने ॥ श्रीरासमंडलेरम्यावृंदावनविनोदिनी ॥ २४ ॥ श
तशृंगाधिदेवीत्वंनाम्नाचित्रावलीतिच ॥ दक्षकन्याकुत्रकल्पेकुत्रकल्पेचशैलजा ॥ २५ ॥ देवमातादितिस्त्वंचसर्वाधारा
वसुंधरा ॥ त्वमेवगंगातुलसीत्वंचस्वाहास्वधासती ॥ २६ ॥ त्वदंशांशांशकलयासर्वदेवादियोषितः ॥ स्त्रीरूपंचातिपुरुषंदे
वित्वंचनपुंसकम् ॥ २७ ॥ वृक्षाणांवृक्षरूपात्वंसृष्टाचांकुररूपिणी ॥ वह्नौचदाहिकाशक्तिर्जलेशैत्यस्वरूपिणी ॥ २८ ॥
सूर्यतेजःस्वरूपाचप्रभारूपाचसंततं ॥ गंधरूपाचभूमौचआकाशेशब्दरूपिणी ॥ २९ ॥ शोभास्वरूपाचंद्रेचपद्मसंघेचनि
श्चितम् ॥ सृष्टौसृष्टस्वरूपाचपालनेपरिपालका ॥ ३० ॥ महामारीचसंहारेजलेचजलरूपिणी ॥ क्षुत्त्वंदयात्वंनिद्रात्वंतृ
ष्णात्वंबुद्धिरूपिणी ॥ ३१ ॥ तुष्टिस्त्वंचापिपुष्टिस्त्वंश्रद्धात्वंचक्षमास्वयम् ॥ शांतिस्त्वंचस्वयंभ्रांतिःकांतिस्त्वंकीर्तिरेवच ॥
॥ ३२ ॥ लज्जात्वंचतथामायाभुक्तिमुक्तिस्वरूपिणी ॥ सर्वशक्तिस्वरूपात्वंसर्वसंपत्प्रदायिनी ॥ ३३ ॥ वेदेनिर्वचनीया

त्वंत्वांनजानातिकश्चन ॥ सहस्रवक्त्रस्त्वांस्तोतुंनचशक्तः सुरेश्वरि ॥ ३४ ॥ वेदानशक्ताःकोविद्वान्नचशक्तःसरस्वती ॥ स्वयं विधाताशक्तोननचविष्णुःसनातनः ॥ ३५ ॥ किंस्तौमिपंचवक्त्रेणरणत्रस्तोमहेश्वरि ॥ कृपांकुरुमहामायेममशत्रुक्षयं कुरु ॥ ३६ ॥ इत्युक्त्वाचसकरुणंरथस्थेपतितेरणे ॥ आविर्बभूवसादुर्गासूर्यकोटिसमप्रभा ॥ ३७ ॥ नारायणेनकृपयाप्रेरितापरमात्मना ॥ शिवस्यपुरतःशीघ्रंशिवायचजयायच ॥ ३८ ॥ इत्युवाचमहादेवीमायाशक्त्यासुरंजहि ॥ ॥ श्रीदुर्गोवाच ॥ ॥ वरंवृणीष्वभद्रंतेयत्तेमनसिवांछितं ॥ ३९ ॥ भवान्वरःसुराणांचजयंतुभ्यंददाम्यहं ॥ ॥ श्रीमहादेवउवाच क्षयोभवतुदैत्यस्यइतिमेवरमीश्वरि ॥ देहीतिवांछितंदुर्गेपरमाद्येसनातनि ॥ ४० ॥ भगवत्यु० ॥ हरिंस्मरमहाभाग जयदैत्यंजगद्गुरो ॥ स्वयंविधाताभगवान्त्वमेवज्योतिरीश्वर ॥ ४१ ॥ एतस्मिन्नंतरेविष्णुर्वृषरूपोबभूवह ॥ दधारक लयामूर्ध्नाशूलपाणेरथंविभुः ॥ ऊर्ध्वंचक्रमथोग्रंचप्रकृतिंचचकारसः ॥ ४२ ॥ शस्त्रंददौमंत्रपूतमुद्दधारततोरथम् ॥ शिवः शस्त्रंगृहीत्वाचध्यात्वाविष्णुंमहेश्वरीम् ॥ ४३ ॥ जघानत्रिपुरंशीघ्रंसपपातमहीतले ॥ तुष्टुवुःशंकरंदेवाश्चक्रुश्चपुष्पव र्षणं ॥ ४४ ॥ दुर्गातस्मैददौशूलंपिनाकंविष्णुरेवच ॥ ब्रह्माशुभाशिषंचैवमुनयश्चापिहर्षिताः ॥ ४५ ॥ ननृतुर्देवताःसर्वा जगुर्गंधर्वकिन्नराः ॥ एतस्मिन्नंतरेतातस्तवराजमनुत्तमं ॥ ४६ ॥ विघ्नंविघ्नकरंशीघ्रंशत्रुसंहारकारणं ॥ परमैश्वर्यज नकंसुखदंपरमंशुभं ॥ ४७ ॥ निर्वाणमोक्षदंचैवहरिभक्तिपदंध्रुवम् ॥ गोलोकवासदंचैवसर्वसिद्धिप्रदंवरम् ॥ ४८ ॥ स्तो त्रराजप्रपठनात्प्रसन्नापार्वतीसदा ॥ लोभमोहकामक्रोधकर्ममूलनिकृंतनं ॥ ४९ ॥ बलंबुद्धिकरंचैवजन्ममृत्युविनाश नम् ॥ धनपुत्रप्रियाभूमिसर्वसंपत्प्रदंनृणाम् ॥ ५० ॥ शोकदुःखहरंचैवसर्वसिद्धिप्रदंवरं ॥ स्तोत्रराजप्रपठनात्महावं

ध्याप्रसूयते ॥ ५१ ॥ बंधनान्मुच्यतेदुःखीभयान्मुच्येतनिश्चितम् ॥ रोगाद्विमुच्यतेरोगीदरिद्रश्चधनीभवेत् ॥ दावा
ग्निमध्येनमृतोमग्नःपोतोमहार्णवे ॥ दस्युग्रस्तोरिपुग्रस्तोहिंस्रजंतुसमन्वितः ॥ ५३ ॥ स्तोत्रेणानेनवैश्येंद्रकल्याणंल
भतेनरः ॥ तैजसानांयथारत्नमाश्रमाणांद्विजोयथा ॥ ५४ ॥ नदीनांचयथागंगामंत्राणांप्रणवोयथा ॥ तुलसीसर्वपत्रा
णांधराणांचवसुंधरा ॥ ५५ ॥ पुष्पाणांपारिजातंचकाष्ठानांचंदनंयथा ॥ विष्णुपूजाचतपसांव्रतेष्वेकादशीयथा ॥ ५६ ॥
ज्ञानिनांचयथाशंभुःसिद्धानांचगणेश्वरः ॥ देवानांचयथाविष्णुर्वेदाःशास्त्रेषुतंत्रतः ॥ ५७ ॥ देवीनांचयथादुर्गाशांतानां
कमलायथा ॥ सरस्वतीचविदुषांराधिकासुंदरीषुच ॥ ५८ ॥ तथास्तोत्रेष्विदंस्तोत्रंनातःपरतरंव्रज ॥ पुरादत्तंब्रह्मणेचपु
ष्करेसूर्यपर्वणि ॥ ५९ ॥ दैत्यग्रस्तायभीतायसर्वदुर्गहरंपरम् ॥ शिवायशत्रुग्रस्तायददौब्रह्मामदाज्ञया ॥ ६० ॥ शिव
श्चसनकादिभ्यःपुरादुर्वाससेददौ ॥ सनत्कुमारोभगवान्कृपयागौतमायच ॥ ६१ ॥ पुलहायपुलस्त्यायददौचांगिरसेमु
दा ॥ तथाचंद्रायसूर्यायसूर्यश्चापियमायच ॥ ६२ ॥ यमश्चचित्रगुप्तायकृपयाचपुराददौ ॥ नित्यंपठिष्यसिस्तोत्रंगो
लोकगमनायवै ॥ ६३ ॥ साक्षात्पश्यसिभोताततामेवपार्वतीमिह ॥ यस्मैकस्मैनदातव्यंपापिनेगोपनंकुरु ॥ ६४ ॥ नारा
यणस्यभक्तायशांतायविदुषेतथा ॥ सर्वज्ञायचविप्रायप्रदातव्यंप्रयत्नतः ॥ ६५ ॥ विप्रायवृषवाहायवृषलीपतयेतथा
॥ शूद्राणांसूपकारायशूद्रश्राद्धान्नभोजिने ॥ ६६ ॥ कन्याविक्रयिणेचैवब्राह्मणायविशेषतः ॥ सर्वसिद्धिंचलभतेसिद्धस्तो
त्रोभवेद्यदि ॥ ६७ ॥ दशायुतजपेनैवसिद्धस्तोत्रोभवेन्नरः ॥ अग्निस्तंभंजलस्तंभंमृत्युस्तंभंमनसस्तथा ॥ ६८ ॥ अश्वमेध
सहस्राच्चपृथिव्याश्चप्रदक्षिणात् ॥ स्नानाच्चसर्वतीर्थानांस्तोत्रमेतच्चपुण्यदं ॥ ६९ ॥ दत्तंतुभ्यंमयातातममप्राणसमंव्र

ज ॥ स्तवनंकुरुपार्वत्याश्चेदानींममसंसदि ॥ ७० ॥ श्रीकृष्णस्यवचःश्रुत्वानंदस्तुष्टावपार्वतीम् ॥ स्तोत्रेणानेनविप्रेंद्रसर्वं
संपत्प्रदायिनीं ॥ ७१ ॥ वरंतस्मैददौदुर्गागोलोकवासमीप्सितम् ॥ दुर्लभंपरमंज्ञानंवेदेयन्नश्रुतंमुने ॥ ७२ ॥ राजेंद्रत्वं
गोकुलेचकृष्णभक्तिंसुदुर्लभाम् ॥ तद्दास्यंचाापपरतोमहत्त्वंसिद्धमेवच ॥ ७३ ॥ वरंदत्वाययौदुर्गासंभाष्यशंभुनासह ॥
जग्मुर्देवाश्चमुनयःस्तुत्वाचनंदनंदनं ॥ ७४ ॥ उवाचनंदंश्रीकृष्णोव्रजनंदव्रजान्वितः ॥ प्रत्यक्षरस्य कमोहश्चबोधेनदुर्लभे
नच ॥ ७५ ॥ इतिश्रीब्रवै० महापुराणेश्रीकृष्णजन्मखंडेभगवन्नंदसंवादेअष्टाशीतितमोऽध्यायः ॥ ८८ ॥ श्रीकृष्णउवाच
गच्छगच्छगृहंगच्छव्रजराजव्रजंव्रज ॥ सर्वतत्वंत्वयाज्ञातदृष्टाश्चमुनयःसुराः ॥ १ ॥ श्रुतंमेधन्यमाख्याननानाख्यानं
सुदुर्लभम् ॥ दुर्गायाःस्तोत्रराजंचजन्मपापनिकृंतनं ॥ २ ॥ स्थितंतत्तेनिगदितंहर्षेणचसुखेनच ॥ यत्कृतंबालभावेनचा
पराधंचतत्क्षम ॥ ३ ॥ यत्सुखंनकृतंतातपित्रोश्चनृपमंदिरे ॥ कृतंसुखंतत्परंचस्वर्गादपिसुदुर्लभम् ॥ ४ ॥ मदीयंप्रियवा
क्यंचप्रह्वत्वंविनयंनयम् ॥ परिहासंबहुतरंयशोदांगोपिकागणम् ॥ ५ ॥ बालकानांसमूहंचराधांचापिविशेषतः ॥ एक
त्रचस्थितंतेषुबंधुवर्गेषुकर्मणा ॥ ६ ॥ इहैवापिसुखंभुक्त्वागच्छगोलोकमुत्तमं ॥ सार्द्धंयशोदयातातरोहिण्यागोपिकाग
णैः ॥ ७ ॥ गोपानांबालकैःसार्द्धंवृषभानेनगोपकैः ॥ राधामात्राकलावत्याराधयासहयास्यसि ॥ ८ ॥ रथानांशतलक्षंच
गोलोकादागतंपितः ॥ अमूल्यरत्ननिर्माणंहीरहारपरिष्कृतं ॥ ९ ॥ मणिमाणिक्यमुक्तानांमालाजालविभूषितं ॥ वह्नि
शुद्धांशुकैरम्यैराच्छिन्नंपीतवर्णकैः ॥ १० ॥ पार्षदप्रवरैरम्यैर्वेष्टितंश्वेतचामरैः ॥ सद्रत्नदर्पणैरम्यैर्गोपिकाभिश्चगोपकैः ॥
वेष्टितंचतदारुह्यकौतुकाद्यास्यसिध्रुवं ॥ ११ ॥ त्यक्त्वाचपार्थिवंदेहंदिव्यदेहंविधायच ॥ अयोनिसंभवाराधाराधामाता

कलावती ॥ १२ ॥ यास्यत्येवहितेनैवनित्यदेहेननिश्चितं ॥ पितॄणांमानसीकन्याधन्यामान्याकलावती ॥ १३ ॥ धन्या चसीतामाताचदुर्गामाताचमेनका ॥ अयोनिसंभवादुर्गातारासीताचसुंदरी ॥ १४ ॥ अयोनिसंभवास्ताश्चधन्यामेनाक लावती ॥ इत्येवंकथितंतातगोपनीयंसुदुर्लभम् ॥ वरोयंदत्तस्तुभ्यंचमयाचदुर्गयातथा ॥ १५ ॥ श्रीकृष्णस्यवचःश्रुत्वा प्रत्युवाचव्रजेश्वरः ॥ पुनरेवजगन्नाथंतद्भक्तोभक्तवत्सलं ॥ १६ ॥ नंदउवाच ॥ ॥ युगानांचचतुर्णांचयंयंधर्मंसनात नम् ॥ क्रमेणकृष्णविस्तीर्णंकृत्वामांकथयप्रभो ॥ १७ ॥ कलीशेषेभवेद्यद्यद्गुणदोषंकलेस्तथा ॥ कागतिर्वापृथिव्याश्चधर्म स्यप्राणिनांतथा ॥ १८ ॥ नंदस्यवचनंश्रुत्वाहृष्टःकमललोचनः ॥ कथांकथितुमारेभेविचित्रांमधुरान्विताम् ॥ १९ ॥ इतिश्रीब्र० महापु० श्रीकृष्णज० भगवन्नंदसंवादेनवाशीतितमोऽध्यायः ॥ ८९ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शृणुनंदप्रव क्ष्यामिसानंदंमानसंयथा ॥ कथांरम्यांसुमधुरांपुराणेषुपरिष्कृताम् ॥ १ ॥ परिपूर्णतमोधर्मोधार्मिकाश्चकृतेयुगे ॥ परि पूर्णतमंसत्यंपरिपूर्णतमादया ॥ २ ॥ अतीवप्रज्वलद्रूपावेदाश्चत्वारएवच ॥ वेदांगाश्चापिविविधाश्चेतिहासश्चसंहिता ॥ ३ ॥ पुराणानिसुरम्याणिपंचरात्राणिपंचच ॥ रुचिराणिसुभद्राणिधर्मशास्त्राणियानिच ॥ ४ ॥ विप्रावेदविदःसर्वे पुण्यवंतस्तपस्विनः ॥ नारायणंतेध्यायंतेतन्मनस्काजपंतिच ॥ ५ ॥ ब्राह्मणाःक्षत्रियावैश्याश्चतुर्वर्णाश्चवैष्णवाः ॥ शू द्राब्राह्मणभृत्याश्चसत्यधर्मपरायणाः ॥ ६ ॥ राजानोधार्मिकाश्चैवप्रजापालनतत्पराः ॥ गृह्णंत्येवप्रजानांचषोडशांश कलांनृपाः ॥ ७ ॥ करशून्याश्चविप्राश्चपूज्याःस्वच्छंदगामिनः ॥ संततंसर्वसस्याढ्यारत्नाधारावसुंधरा ॥ ८ ॥ गुरुभ क्ताश्चशिष्याश्चपितृभक्ताःसुतास्तथा ॥ योषितःपतिभक्ताश्चपतिव्रतपरायणाः ॥ ९ ॥ ऋतौसंभोगिनःसर्वेनस्त्रीलुब्धानलं

पटाः ॥ नभयंदस्युचौर्याणांनतत्रपारदारिकाः ॥ १० ॥ तरवःपूर्णफलिनःपूर्णक्षीराश्चधेनवः ॥ बलवंतोजनाःसर्वेदीर्घाः
सौंदर्यसंयुताः ॥ ११ ॥ लक्षवर्षायुषःकेचित्पुण्यवंतोत्परोगिणः ॥ यथाविप्राविष्णुभक्तास्त्रिवर्णाविष्णुसेविनः ॥ १२ ॥
जलपूर्णानदानद्यःसंततंकंदरास्तथा ॥ तीर्थंपूताश्चतुर्वर्णास्तपःपूताद्विजातयः ॥ १३ ॥ मनःपूताश्चनिखिलाखलहीनं
जगत्रयं ॥ सत्कीर्तिपरिपूर्णंचयशस्यंमंगलान्वितं ॥ १४ ॥ पितरःसर्वकालेषुतिथिकालेषुदेवताः ॥ सर्वकालेष्वतिथयः
पूजिताश्चगृहेगृहे ॥ १५ ॥ त्रिवर्णाविप्रभक्ताश्चविप्रभोजनतत्पराः ॥ ब्राह्मणस्यमुखंक्षेत्रमनूषरमकंटकं ॥ १६ ॥ नाराय
णोत्कीर्तनेनहर्षयुक्तास्तदुत्सवे ॥ नदेवानांद्विजानांचविदुषांतत्रनिंदकाः ॥ १७ ॥ नात्मप्रशंसकाःकेचित्सर्वेपरगुणोत्सु
काः ॥ नशत्रवोजनानांचसर्वेसर्वहितैषिणः ॥ १८ ॥ पुरुषायोषितश्चापिनहिमूर्खाश्चपंडिताः ॥ नदुःखिनोजनाःसर्वेसर्वेषां
रत्नमंदिरं ॥ १९ ॥ मणिमाणिक्यरत्नौघरत्नस्वर्णसमन्वितं ॥ नभिक्षुकानरोगार्ताःशोकहीनाश्चहर्षिताः ॥ २० ॥ नहिभू
षणहीनाश्चनरानार्यश्चकेचन ॥ नपापिनोनधूर्ताश्चनक्षुधार्तानकुत्सिताः ॥ २१ ॥ जराहीनाःप्राणिनश्चशश्वद्यौवनसंस्थि
ताः ॥ आधिव्याधिविहीनाश्चनिर्विकाराश्चदेहिनः ॥ २२ ॥ यदुक्तोवैसत्ययुगेधर्मःसत्यंदयादिकम् ॥ पादहीनश्चत्रेतायांस
त्यार्द्धंद्वापरेपिच ॥ २३ ॥ धर्मैकपाच्चप्रथमेकलेश्चापिकृशोबलः ॥ दुष्टानांदस्युचौर्याणामंकुरःप्रभवेद्विज ॥ २४ ॥ अधर्म
निरताःकेचिद्भीताःसंगोपिनस्तथा ॥ भीतागुप्ताश्चपुंश्चल्योभीताश्चपरदारिकाः ॥ २५ ॥ धर्मिष्ठानांभयंशश्वदधर्मिष्ठाश्च
कंपिताः ॥ स्वल्पधर्मरताभूपाःस्वल्पवेदरताद्विजाः ॥ २६ ॥ व्रतधर्मरताःकेचित्सर्वेस्वच्छंदगामिनः ॥ यावत्तिष्ठंतितीर्था
नियावत्तिष्ठंतिसाधवः ॥ २७ ॥ यावत्तिष्ठंतिग्रामाणांदेवाःशास्त्राणिपूजनं ॥ तावत्किंचित्तपःसत्यंस्वर्गधर्मांशएवच ॥

॥ २८ ॥ कलेर्दोषनिधेस्तातगुणएकोमहानपि ॥ मानसंचभवेत्पुण्यंसुकृतंनहिदुष्कृतं ॥ २९ ॥ तीर्थादिकेगतेतातनष्टो
धर्मांशएवच ॥ कलारूपश्चधर्मश्चयथाकुह्वांनिशाकरः ॥ ३० ॥ नंदउवाच ॥ तीर्थान्येतानिसर्वाणितिष्ठंत्येवकियद्दिनं ॥
माधवोग्राम्यदेवाश्चशास्त्राण्येतानिवत्सक ॥ ३१ ॥ श्रीकृष्णउवाच ॥ ॥ कलौदशसहस्राणिहरिस्तिष्ठतिमेदिनीम् ॥ देवा
नांप्रतिमापूज्याशास्त्राणिचपुराणकं ॥ ३२ ॥ तदर्धमपितीर्थानिगंगादीनिसुनिश्चितं ॥ तदर्धंग्रामदेवाश्चवेदाश्चविदुषा
मपि ॥ ३३ ॥ अधर्मःपरिपूर्णश्चतदंतेचकलौपितः ॥ एकवर्णाभविष्यंतिवर्णाश्चत्वारएवच ॥ ३४॥ नमंत्रपूतोद्वाहश्चनहि
सत्यंनचक्षमा ॥ स्त्रीस्विकाररतोनित्यंग्राम्यधर्मप्रधानतः ॥ ३५ ॥ नयज्ञसूत्रंतिलकंब्राह्मणानांचनित्यशः ॥ संध्याशा
स्त्रविहीनाश्चविप्रवंशाःश्रुताअपि ॥ ३६ ॥ सर्वैःसार्धंचसर्वेषांभक्षणंनियमच्युतं ॥ अभक्ष्यभक्षालोकाश्चचतुर्वर्णाश्चलंप
टाः ॥ ३७ ॥ नारीषुनसतीकाचित्पुंश्चलीचगृहेगृहे ॥ करोतितर्जनंकांतंभृत्यतुल्यंचकंपितं ॥ ३८ ॥ जारायदत्वामिष्टा
न्नंतांबूलंवस्त्रचंदनम् ॥ नददात्येवचाहारंस्वामिनेदुःखिनेपितः ॥ ३९ ॥ पुत्रेणभर्त्सितस्तातशिष्येणभर्त्सितोगुरुः ॥ प्र
जाभिस्ताडितोभूपोभूपेनताडिताःप्रजाः ॥ ४० ॥ दस्युचोरैश्चदुष्टैश्चशिष्टाश्चपरिपीडिताः ॥ सस्यहीनाचवसुधाक्षीररही
नाश्चधेनवः ॥ ४१ ॥ स्वल्पक्षीरेघृतंनास्तिनवनीतंचनित्यिशः ॥ सत्यहीनाजनाःसर्वेनित्यंमिथ्यावदंतिच ॥ ४२॥ शौच
संध्याशास्त्रहीनाब्राह्मणावृषवाहकाः ॥ सूपकाराश्चशूद्राणांशूद्राणांशवदाहकाः ॥४३॥ शूद्रस्त्रीनिरताःशश्वच्छूद्राविप्रवधू
रताः ॥ खादंतियस्यविप्रस्यभक्ष्यंचपरिपाचकाः ॥ ४४ ॥ मातुःपरांतस्यपत्नींशूद्रागृह्णंतिलंपटाः ॥ भृत्यश्चहत्वाराजा
नंस्वयंराजाभविष्यति ॥ ४५ ॥ नारीहत्वापतिंकामाद्व्रजेज्जारंचकौतुकात् ॥ पुत्रश्चपितरंहत्वास्वयंभूपोभविष्यति ॥

॥ ४६ ॥ सर्वेस्वच्छंदनिरताःशिश्नोदरपरायणाः ॥ वंखराव्याधियुक्ताश्चकुत्सिताश्चकुचैलकाः ॥ ४७ ॥ विक्षुण्णमंत्रलि
प्ताश्चमिथ्यामंत्रप्रचारकाः ॥ जातिहीनाश्चगुरवोवयोहीनाश्चनिंदकाः ॥ ४८॥ राजानश्चापिम्लेछाश्चयवनाधर्मनिंदकाः॥
सत्कीर्तिमपिसाधूनांकुर्वंत्युन्मूलनंमुदा ॥४९ ॥ पितृदेवद्विजातीनामतिथीनांचनित्यशः ॥ पूजानास्तिगुरूणांचपित्रो
श्चपूजनंस्त्रियः ॥ ५० ॥ स्त्रीबंधूनांगौरवंचस्त्रीणांचसततंपितः ॥ चोरःसत्कुलजातिश्चब्राह्मणोदेवहारकः ॥ ५१ ॥ मानं
वहंतिलोभेनयुगेधर्मेणकौतुकात् ॥ देवायतनहीनंचजगत्सर्वंभयाकुलं ॥ ५२ ॥ अराजकंचदुर्नीतंसंततंकलिदोषतः॥
बुभुक्षिताःकुचैलाश्चदरिद्राव्याधिनोनराः ॥ ५३ ॥ कपर्दकघटाध्यक्षोराजेंद्रोहिघटेश्वरः ॥ वृद्धांगुष्ठसमालोकावृक्षाःशा
कसमास्तथा ॥ ५४॥ तालानांनारिकेराणांपनसानांतथैवच ॥ फलानिसर्षपाण्येवतत्क्षुद्रंचततःपरं ॥ ५५ ॥ जलभाजन
पात्रेणसस्येनवाससातथा ॥ विहीनंमंदिरंसर्वंगृहाणामपरिष्कृतं ॥५६॥ गंधकेनपरिवृतंदीपहीनंतमोयुतं ॥ हिंस्रजंतुभ
याद्भीताजनाःसर्वेचपापिनः ॥५७॥ सर्वेचफललोभिष्ठाःपुंश्चल्यःकलहप्रियाः ॥ रूपवत्योनकामिन्योनराश्चापिनरूपिणः
॥ ५८ ॥ नद्योनदाःकंदराश्चतडागाश्चसरोवराः ॥ जलपद्मविहीनाश्चजलहीनाघनास्तथा ॥ ५९ ॥ अपत्यहीनानार्यश्चका
मुक्योजारसंयुताः ॥ अश्वत्थच्छेदिनःसर्वेवृक्षहीनावसुंधरा ॥ ६० ॥ फलहीनाश्चतरवःशाखास्कंधविहीनकाः ॥ फला
निस्वादुहीनानिचान्नानिचजलानिच ॥ ६१ ॥ मानवाःकटुवक्तारोनिर्दयाधर्मवर्जिताः ॥ तदंतेद्वादशादित्याःसंहरिष्यंति
मानवान् ॥ ६२ ॥ सर्वान्जंतूंश्चतापेनबहुवृष्ट्याव्रजेश्वर ॥ अवशिष्टाचपृथिवीकथामात्रावशेषिता ॥ ६३ ॥ कलौगते
चपृथिवीक्षेत्रंवर्षागतेतथा ॥ पुनःसत्यप्रवृत्तिश्चभविष्यतिक्रमेणवै ॥ ६४ ॥ इत्येवंकथितंसर्वंगच्छतातव्रजंसुखं ॥ अ

हंदुग्धमुखोबालःपुत्रस्तेकथयामिकिं ॥ ६५ ॥ नवनीतंघृतंदुग्धंदधितक्रंपरिष्कृतं ॥ स्वस्तिकंशुभकर्माहंमिष्टान्नंचसु
धोपमं ॥ ६६ ॥ मिष्टद्रव्यंचयत्किंचित्पितृदेवनिमित्तकं ॥ भुक्तंबलाच्चतत्सर्वंबालानांरोदनंबलं ॥ ६७ ॥ तत्क्षमस्वापरा
धंमेबालदोषःपदेपदे ॥ त्वंपितातवपुत्रोहंयशोदाजननीमम ॥ ६८ ॥ मदीयंपरिहासंचयशोदांरोहिणींवद ॥ कुमारास्या
च्छुतंसर्वंसोहमित्येवमीप्सितं ॥ ६९ ॥ कीर्तयिष्यसितत्सर्वंसर्वंगोकुलवासिनं ॥ कालःकरोतिसंसर्गंबंधूनांबंधुभिःसह॥
॥ ७० ॥ कालःकरोतिविच्छेदंविरोधंप्रीतिमेवच ॥ कालःसृष्टिंचकुरुतेकालश्चपरिपालनं ॥ ७१ ॥ कालःकरोतिसानंदंका
लःसंहरतेप्रजाः॥ सुखंदुःखंभयंशोकंजरांमृत्युंचजन्मच ॥ ७२ ॥ सर्वंकर्मानुरोधेनकालएवकरोतिच ॥ सर्वंकालकृतंता
तविस्मयंनव्रजंव्रज ॥ ७३ ॥ कुतस्त्वंगोकुलेवैश्योनंदोवैश्याधिपोनृपः ॥ वसुदेवसुतोहंचमथुरायामहोकुतः ॥ ७४ ॥
पित्रामेकंसभीतेनत्वद्गृहेचसमर्पितः ॥ पितुःपरःपितात्वंचमातामातुःपरापिवा ॥ ७५ ॥ मयादत्तेनज्ञानेनपार्वत्याचव्रजे
श्वर ॥ त्यजमोहंमहाभागगच्छतातसुखंगृहम् ॥ ७६ ॥ नंदउवाच ॥ स्मरवृंदावनंतातरम्यंपुण्यंमहोत्सवं ॥ गोकुलंगो
कुलंरम्यंसुंदरंयमुनातटम् ॥ ७७ ॥ रमणीनांसुरम्यंचत्वत्प्रियंरासमंडलं ॥ गोपालिकागोपबालान्यशोदांरोहिणींप्रि
याम् ॥ ७८ ॥ प्राणाधिकांराधिकांनकथंस्मरसिपुत्रक ॥ वारमेकंस्वल्पदिनंगोकुलंगच्छवत्सक ॥ ७९ ॥ इत्येवमुक्त्वानं
दश्चक्रोडेकृष्णंचकारसः ॥ नेत्राश्रुणाचपूर्णेनतंसिषेचशुचान्वितः ॥ ८० ॥ चुचुंबतद्गंडयुगंकृत्वावक्षसिमोहतः ॥ सानंदः
परमानंदोभगवांस्तमुवाचसः ॥ ८१ ॥ इतिश्रीब्रह्मवैव० महापु० श्रीकृष्णज० नवतितमोऽध्यायः ॥ ९० ॥ श्रीभगवानुवा
च ॥ निषेकेनपरिष्वंगोविभेदस्तेनवाभवेत् ॥ क्षणेनदर्शनंतेननिषेकःकेनवार्यते ॥ १ ॥ गमनागमनार्थंचाप्युद्धवःकथयि

ष्यति ॥ प्रस्थापयामितंशीघ्रंविज्ञास्यसिततःपितः ॥ २ ॥ यशोदांरोहिणींचैवगोपिकांगोपबालकान् ॥ प्राणाधिकांरा
धिकांतांगत्वासंबोधयिष्यति ॥ ३ ॥ एतस्मिन्नंतरेतत्रवसुदेवश्चदेवकी ॥ बलदेवश्चोद्धवश्चतथाक्रूरश्चसत्वरम् ॥ ४ ॥ व
सुदेवउ० ॥ ॥ नंदत्वंबलवान्ज्ञानीसद्बंधुश्चसखामम ॥ त्यजमोहंगृहंगच्छवत्सस्तेयंयथामम ॥ ५ ॥ द्वारभूतागोकुलाच्च
मथुरानास्तिबांधवः ॥ महोत्सवेसदानंदेनंदद्रक्ष्यसिपुत्रकं ॥ ६ ॥ श्रीदेवक्युवाच ॥ ॥ यथायमावयोःपुत्रस्तथैवभवतो
ध्रुवम् ॥ सालसःकेनहेनंदशुचादेहोहिलक्ष्यते ॥ ७ ॥ एकादशाब्दंसबलःस्थित्वातेमंदिरेसुखं ॥ कथंस्वल्पदिनेनैवशोकग्र
स्तोभविष्यसि ॥ ८ ॥ तिष्ठपुत्रेणसार्द्धंचमथुरायांकियद्दिनम् ॥ पूर्णचंद्राननंपश्यजन्मत्वंसफलंकुरु ॥ ९ ॥ श्रीभगवा
नुवाच ॥ ॥ गच्छोद्धवसुखंभद्रंभविष्यतितवप्रियं ॥ प्रहर्षंगोकुलंगत्वायशोदांरोहिणींप्रसूम् ॥ १० ॥ गोपबालसमूहंच
राधिकांगोपिकागणम् ॥ प्रबोधयाध्यात्मिकेनमद्दत्तेनशुचिच्छिदा ॥ ११ ॥ नंदस्तिष्ठतुसानंदंमन्मातुराज्ञयाशुचा ॥ नं
दस्थितिंमद्दिनयंयशोदांकथयिष्यसि ॥ १२ ॥ इत्येवमुक्त्वाश्रीकृष्णःपित्रामात्राबलेनच ॥ अक्रूरेणसमंतूर्णंययावा
भ्यंतरंगृहम् ॥ १३ ॥ उद्धवोरजनींस्थित्वामथुरायांचनारद ॥ प्रभातेप्रययौशीघ्रंरम्यंवृंदावनंवनं ॥ १४ ॥ इतिश्रीब्र०
म०श्रीकृष्णजन्मखंडैकनवतितमोऽध्यायः ॥ ९१ ॥ श्रीनारायणउवाच ॥ ॥ श्रीकृष्णप्रेरितोहृष्टःप्रणम्यचगणेश्वरं ॥
स्मरन्नारायणंशंभुंदुर्गांलक्ष्मींसरस्वतीं ॥ १ ॥ गंगांचमनसिध्यात्वादिगीशंतंमहेश्वरम् ॥ प्रजगायोद्धवश्चैवदृष्ट्वामंगल
सूचकं ॥ २ ॥ शुश्रावदुंदुभिंघंटांनादंशंखध्वनिंतथा ॥ हरिशब्दंचसंगीतंशुश्रावमंगलध्वनिम् ॥ ३ ॥ ब्राह्मणानांसमूहं
चकृष्णसारंवृषंधृतं ॥ सद्योमांसंगजेंद्रंचनृपेंद्रंश्वेतघोटकं ॥ ४ ॥ दृष्ट्वैवंपथिकल्याणंप्रापवृंदावनंवनं ॥ ददर्शपुरतोवृक्षं

भांडीरवटमक्षयं ॥ ५ ॥ स्निग्धपूर्णरक्तवर्णंपुण्यदंतीर्थमीप्सितं ॥ सुवेषान्बालकांश्चैवरक्तभूषणभूषितान् ॥ ६ ॥ वदतोबल
कृष्णेतिरुदतश्चशुचान्वितान् ॥ तानाश्वास्ययया॑ौदूरंप्रविश्यनगरंमुदा ॥ ७ ॥ ददर्शनंदशिबिरंरचितंविश्वकर्मणा ॥ मणि
रत्नविनिर्माणंमुक्तामाणिक्यहीरकैः ॥ ८ ॥ पारच्छिन्नमनोरम्यंसद्रत्नकलशान्वितं ॥ द्वारंचित्रंविचित्राढयंदृष्ट्वाचप्रवि
वेशसः ॥ ९ ॥ अवरुह्यरथात्तूर्णंतस्थौतत्प्रांगणेमुदा ॥ यशोदारोहिणीशीघ्रंपप्रच्छकुशलंपरम् ॥ १० ॥ आसनंचजलं
गांचमधुपर्कंददौमुदा ॥ क्वनंदःक्वबलःकृष्णःसत्यंतत्कथयोद्धव ॥ ११ ॥ उद्धवःकथयामाससर्वंभद्रंक्रमेणच ॥ सार्द्धंचबलकृ
ष्णाभ्यांनंदःसानंदपूर्वकं ॥ १२ ॥ आयास्यतिविलंबेनकृष्णोपनयनावधि ॥ युष्माकंकुशलंतत्वंविज्ञायविधिपूर्वकं ॥ १३ ॥
अहंयास्यामिमथुरांयशोदेश्टणुसांप्रतं ॥ श्रुत्वामंगलवार्तांचयशोदारोहिणीमुदा ॥ १४ ॥ ब्राह्मणायददौरत्नंसुवर्णंवस्त्रमी
प्सितं ॥ उद्धवंभोजयामासमिष्टान्नंचसुधोपमं ॥ १५ ॥ मणिश्रेष्ठंचरत्नंचददौतस्मैचहीरकं ॥ वाद्यंचवादयामासभद्रंना
नाविधंतथा ॥ १६ ॥ ब्राह्मणान्भोजयामासकारयामासमंगलं ॥ वेदांश्चपाठयामासपरमानंदपूर्वकं ॥ १७ ॥ शंकरंपूजया
मासविप्रद्वारापरंविभुं ॥ नानोपहारैर्नैवेद्यैःपुष्पधूपप्रदीपकैः ॥ १८ ॥ चंदनैर्वस्त्रतांबूलैर्मधुगव्यघृतादिभिः ॥ भवानींपूजया
मासश्रीवृंदारण्यदेवतां ॥ १९ ॥ षोडशोपचारैर्द्रव्यैश्चबलिभिर्विविधैर्मुने ॥ महिषाणांशतंशुद्धंछागलानांसहस्रकं ॥ २० ॥ मेषा
णामयुतंशुद्धंयुक्तमादायपंचकं ॥ ब्राह्मणेभ्यःस्वर्णशतंधेनूनांचशतंतथा ॥ २१ ॥ प्रददौदक्षिणांतूर्णंकृष्णकल्याणहेतवे ॥
उद्धवंपूजयामाससादरंचपुनःपुनः ॥ २२ ॥ समाश्वास्ययशोदांचरोहिणीगोपबालकान् ॥ वृद्धान्गोपालिकाःसर्वाःप्रययू
रासमंडलं ॥ २३ ॥ ददर्शरासंरुचिरंचंद्रमंडलवर्तुलं ॥ श्रीरामकदलैस्तंभैःशतकैरुपशोभितं ॥ २४ ॥ युक्तैश्चस्निग्धवसनैश्चंदना

नांचपल्लवैः॥ पट्टसूत्रनिबद्धैश्चश्रीयुक्तमाल्यजालकैः॥२५॥ दधिलाजफलैःपट्टैःपुष्पैर्दूर्वांकुरैरपि॥ चंदनागरुकस्तूरीकुं
कुमैःपरिसंस्कृतं ॥२६॥ वेष्टितंरक्षितंयत्नाद्गोपिकानांत्रिकोटिभिः ॥ त्रिलक्षैःसुंदरैरम्यैःसंसिक्तंरतिमंदिरैः॥२७॥ लक्षगो
पैःपरिवृतंकृष्णागमनशंकितैः ॥ यमुनांदक्षिणांकृत्वाप्रययौमालतीवनं ॥२८॥ चंदनानांचंपकानांयूथिकानांतथैवच ॥
केतकीमाधवीनांचवनंकृत्वाप्रदक्षिणं ॥२९॥ बकुलानांवंजुलानामशोकानांचकाननं ॥ मल्लिकानांपलाशानांशिरीषाणां
तथैवच ॥ ३० ॥ धात्रीणांकांचनानांचकर्णिकानांवनंतथा ॥ नागेश्वराणांविपिनंलवंगानांतथैवच ॥३१॥ वनंचशालता
लानांहिंतालानांवनंतथा ॥ पनसानांरसालानांलांगलानांमनोहरम् ॥ ३२ ॥ मंदारकाननंरम्यंवामंकृत्वाचसत्वरं ॥ दृष्ट्वा
कुंदवनंरम्यंसंप्राप्यमधुकाननं ॥ ३३ ॥ पुंस्कोकिलानांशब्देनमधुरेणसमन्वितं ॥ मधुव्रतसमूहानांमधुरध्वनिपूजितं ॥
॥३४॥ वन्यवृक्षैःपरिवृतंमाध्वीकाधारमीप्सितं ॥ वातेनवन्यपुष्पाणांपरितःसुरभीकृतम् ॥ ३५ ॥ तद्दृष्ट्वाराजमार्गेणय
शोदोक्तेनसांप्रतं ॥ ययौशीघ्रंनिरुद्विग्नंरहस्यंबदरीवनं ॥ ३६ ॥ श्रीफलानांचनिंबानांनारिंगाणांवनंतथा ॥ पद्मानांकरवी
राणांतुलसीनांचकाननं ॥ दृष्ट्वारक्तिमवर्णंचसुपक्वफलमीप्सितं ॥ ३७ ॥ तदेववामतःकृत्वाविवेशकदलीवनम् ॥ अती
वनिर्जनेरम्येददर्शराधिकाश्रमम् ॥ ३८ ॥ मणींद्राणांचप्राकारंपरिखादुर्गवेष्टितं ॥ अत्यगम्यंरिपूणांचमित्राणांसुगमं
सुखं ॥ ३९ ॥ गोप्यंसंकेतमार्गंचरक्षकैःपरिरक्षितं ॥ नानाचित्रविचित्राढ्यंनिर्मितंविश्वकर्मणा ॥ ४० ॥ मणींद्रमुक्ता
माणिक्यहीरहारोज्वलंपरम् ॥ रत्नेंद्रसाररचितंरत्नस्तंभैःसुशोभितं ॥ ४१ ॥ रत्नसोपानसंसक्तमंदिरेणमनोहरम् ॥ अमू
ल्यरत्नरचितंकलशैःपरिशोभितं ॥ ४२ ॥ वह्निशुद्धांशुकाभिश्चपताकाभिःपरिष्कृतं ॥ सद्रत्नदर्पणोत्कृष्टंचर्चितंश्वेतचा

मरैः ॥ ४३ ॥ ददर्शसिंहद्वारंचयुक्तंरत्नकपाटकैः ॥ द्वारोपरिविचित्रंचरम्यंवृंदावनंवनं ॥ ४४ ॥ कदंबकाननंरम्यंतद्वस्त्रह
रणादिकं ॥ विश्वकर्माविरचितंसुरम्यंरासमंडलं ॥ ४५ ॥ नानारत्नकुटीरंचगोपगोपीसमन्वितं ॥ रक्षितंगोपिकालक्षैर्वे
त्रहस्तैर्मनोहरैः ॥ ४६ ॥ स्वच्छंदाचरणैःशश्वदभीतैर्बलिभिर्मुदा ॥ तद्द्वारंपुरतोदृष्ट्वाविलंघ्यचजगामसः ॥ ४७ ॥ द्वितीय
द्वारमुल्लंघ्यतस्मादुत्तममीप्सितं ॥ द्वारंचतुर्थंसंप्राप्यसर्वस्माच्चविलक्षणं ॥ ४८ ॥ तत्पश्चात्पंचमंद्वारंददर्शचित्रमुत्तमं ॥
द्वारषट्कंचप्रययौसर्वतोरुचिरंपरं ॥ ४९ ॥ रामरावणयोर्युद्धंभित्तिचित्रंमनोहरम् ॥ दशावतारंविष्णोश्चकृत्रिमंरासमंड
लं ॥ ५० ॥ यमुनांजलकेलींचरचितांविश्वकर्मणा ॥ गोपिकानांसहस्रेणषष्ठद्वारंचरक्षितं ॥ ५१ ॥ रत्नेंद्रसारनिर्माणभूषणै
र्भूषितेनच ॥ सद्रत्नदंडहस्तेनहीरकैर्भूषितेनच ॥ ५२ ॥ मणींद्रमुक्तामाणिक्यहीरहारान्वितेनच ॥ माधवीतत्प्रधानासा
पप्रच्छसांप्रतंशिवम् ॥ ५३ ॥ ददौप्रत्युत्तरंसर्वंक्रमेणचसउद्धवः ॥ गत्वाविज्ञापयामासराधाप्रियसखीगणम् ॥ ५४ ॥
सामाधवीमहात्दृष्टातत्रसंस्थाप्यतंमुदा ॥ श्रुत्वामंगलवार्तांचराधाप्रियसखीगणैः ॥ ५५ ॥ कृत्वाशंखध्वनिंघंटांमृदंग
पणहस्वनं ॥ कृत्वानिर्मंथनंशीघ्रमुद्धवंप्रियमागतम् ॥ ५६ ॥ कृष्णाप्रवेशयामासराधाभ्यंतरमुत्तमं ॥ अमूल्यरत्ननिर्माणं
गत्वामंदिरमुत्तमं ॥ ५७ ॥ ददर्शपुरतोराधांकुह्वांचंद्रकलोपमाम् ॥ सुपक्वपद्मनेत्रांचशयानांशोकमूर्छितां ॥ ५८ ॥ रुदंतीं
रक्तवदनांक्लिष्टांचत्यक्तभूषणां ॥ निश्चेष्टांचनिराहारांसुवर्णवर्णकुंडलां ॥ ५९ ॥ शुष्किताधरकंठांचकिंचिन्निश्वाससंयुतां
॥ प्रणनामचतांदृष्ट्वाभक्तिनम्रात्मकंधरः ॥ ६० ॥ पुलकांचितसर्वांगोभक्त्याभक्तःसउद्धवः ॥ उद्धवउ० ॥ वंदेराधापदांभो
जंब्रह्मादिसुरवंदितं ॥ यत्कीर्तिकीर्तनेनैवपुनातिभुवनत्रयम् ॥ ६१ ॥ नमोगोकुलवासिन्यैराधिकायैनमोनमः ॥ शतशृं

गनिवासिन्यैचंद्रवत्यैनमोनमः ॥ ६२ ॥ तुलसीवनवासिन्यैवृंदारण्यैनमोनमः ॥ रासमंडलवासिन्यैरासेश्वर्यैनमोनमः ॥ ॥ ६३ ॥ विरजातीरवासिन्यैवृंदायैचनमोनमः ॥ वृंदावनविलासिन्यैकृष्णायैचनमोनमः ॥६४॥ नमःकृष्णप्रियायैच शांतायैचनमोनमः ॥ कृष्णवक्षस्थितायैचतत्प्रियायैनमोनमः ॥ ६५ ॥ नमोवैकुंठवासिन्यैमहालक्ष्म्यैनमोनमः ॥ विद्याधिष्ठातृदेव्यैचसरस्वत्यैनमोनमः ॥ ६६ ॥ सर्वैश्वर्याधिदेव्यैचकमलायैनमोनमः ॥ पद्मनाभप्रियायैचपद्मायैचनमोनमः ॥ ६७॥ महाविष्णोश्चमात्रेचपराद्यायैनमोनमः ॥ नमःसिंधुसुतायैचमर्त्यलक्ष्म्यैनमोनमः ॥६८॥ नारायणप्रियायैचनारायण्यैनमोनमः ॥ नमोस्तुविष्णुमायायैवैष्णव्यैचनमोनमः ॥ ६९॥ महामायास्वरूपायैसंपदायैनमोनमः ॥ नमःकल्याणरूपिण्यैशुभायैचनमोनमः ॥ ७०॥ मात्रेचतुर्णांवेदानांसावित्र्यैचनमोनमः ॥ नमोदुर्गविनाशिन्यैदुर्गादेव्यैनमोनमः ॥ ॥ ७१॥ तेजःसुसर्वदेवानांपुराकृतयुगेमुदा ॥ अधिष्ठानकृतायैचप्रकृत्यैचनमोनमः ॥७२॥ नमस्त्रिपुरहारिण्यैत्रिपुरायैनमोनमः ॥ सुंदरीषुचरम्यायैनिर्गुणायैनमोनमः ॥ ७३ ॥ नमोनिद्रास्वरूपायैनिर्गुणायैनमोनमः ॥ नमोदक्षसुतायैचनमःसत्यैनमोनमः ॥ ७४ ॥ नमःशैलसुतायैचपार्वत्यैचनमोनमः ॥ नमोनमस्तपस्विन्यैत्युमायैचनमोनमः ॥ ७५ ॥ निराहारस्वरूपायैत्यपर्णायैनमोनमः ॥ गौरीलोकविलासिन्यैनमोगौर्यैनमोनमः ॥ ७६ ॥ नमःकैलासवासिन्यैमाहेश्वर्यैनमोनमः ॥ निद्रायैचदयायैचश्रद्धायैचनमोनमः ॥ ७७ ॥ नमोधृत्यैक्षमायैचलज्जायैचनमोनमः ॥ तृष्णायैक्षुत्स्वरूपायैस्थितिकर्त्र्यैनमोनमः ॥ ७८ ॥ नमःसंहाररूपिण्यैमहामार्यैनमोनमः ॥ भयायैचाभयायैचमुक्तिदायैनमोनमः ॥ ७९॥ नमःस्वधायैस्वाहायैशांत्यैकांत्यैनमोनमः ॥ नमस्तुष्ट्यैचपुष्ट्यैचदयायैचनमोनमः ॥ ८० ॥ नमोनिद्रास्वरूपायैश्रद्धा

वयंसान्हाहिकाःशिवे ॥ ६ ॥ उवाचबाणंतांदातुंसचनस्वीचकारह ॥ दुर्गातंबोधयामासनबुबोधचसद्वचः ॥ ७ ॥ तएस्मि
न्नंतरेतांचसभामध्येमनोरमाम् ॥ आजगाममहाधर्मोबलिश्चवैष्णवाग्रणीः ॥ ८ ॥ रथंरत्नेंद्रनिर्माणंसमारुह्यमहाबलः ॥
प्रततैःसप्तभिर्दैत्यैःसेवितःश्वेतचामरैः ॥ ९ ॥ दैत्येंद्राणांसप्तलक्षैरावृतःपरमास्त्रवित् ॥ अवरुह्यरथात्तूर्णंगणेशंचशिवां
शिवम् ॥ १० ॥ प्रणम्यकार्तिकेयंचसउवासचसंसदि ॥ उत्तस्थुराराततंदृष्ट्वातेसर्वेशंकरंविना ॥ ११ ॥ तमुवाचमहादेवः
संभाष्यप्रियभाषणम् ॥ ॥श्रीमहादेवउवाच ॥ ॥भगवंश्चतुरस्त्वंचप्रदातासर्वसंपदाम् ॥ १२ ॥ अयंहिपरमोलाभो
वैष्णवानांसमागमः ॥ तीर्थाण्यपिचपूतानिवैष्णवस्पर्शमात्रतः ॥ १३ ॥ सर्वेषामाश्रमाणांचपूजितोब्राह्मणःशुचिः ॥ त
तोधिकःपूजितोपिब्राह्मणोयदिवैष्णवः ॥ १४ ॥ नहिपूतंचपश्यामिवैष्णवब्राह्मणात्परम् ॥ सपूतःपवनादेवसपूतंश्चहुता
शनात् ॥ १५ ॥ तीर्थेभ्योपिचसर्वेभ्योबिभेतिचततःसुरः ॥ नहिपापानितद्देहेवन्हौशुष्कतृणादिवत् ॥ १६ ॥ बलिरुवाच
कथंस्तौषिजगन्नाथभृत्यस्तवमहेश्वर ॥ प्रदत्तंपरमैश्वर्यंत्वयानाथसुदुर्लभम् ॥ १७ ॥ अधुनास्थापितोदैवात्सर्वाधःसु
तलेपिच ॥ इंद्रायदत्तमैश्वर्यंमत्तोभक्तात्सुरेश्वर ॥ १८ ॥ त्वयावामनरूपेणसर्वरूपोसिसर्वतः ॥ बाणंबोधयभद्रंचममप्रा
णात्मजंपरम् ॥ १९ ॥ आत्मनासहयुद्धंचदेवेष्वपिविगर्हितम् ॥ इत्युक्त्काचशिवंनत्वाशिरसाप्रणनामतम् ॥ २० ॥ सा
मवेदोक्तस्तोत्रेणतुष्टावपरमेश्वरम् ॥ पुलकांचितसर्वांगःसाश्रुनेत्रोतिविव्हलः ॥ २१ ॥ ध्यायमानश्चनित्यंयोव्हृत्पद्मे
सुमनोहरः ॥ शुक्रेणदत्तंमंत्रंचजप्त्वाचैकादशाक्षरम् ॥ २२ ॥ ॥बलिरुवाच ॥ ॥ अदित्याप्रार्थनेनैवमात्रादेव्याव्रते
नच ॥ पुरावामनरूपेणत्वयाहंवंचितःप्रभो ॥ २३ ॥ संपद्रूपामहालक्ष्मीर्दत्ताभक्तायभक्तितः ॥ शक्रायमत्तोभक्तायभ्रा

त्रैपुण्यवतेध्रुवम् ॥ २४ ॥ अधुनाममपुत्रोयंबाणःशंकरकिंकरः ॥ आराच्चरक्षितःसोपितेनैवभक्तबंधुना ॥ २५ ॥ परिपु
ष्टश्चपार्वत्यायथामात्रासुतस्तथा ॥ गृहीतवांश्चतत्कन्यांबलेनयुवतींसतीम् ॥ २६ ॥ समुद्यतश्चतंहंतुंकार्तिकेनापिवारि
तः ॥ आगतोसिपुनर्हंतुंपौत्रस्यदमनेक्षमम् ॥ २७ ॥ सर्वात्मनश्चसर्वत्रसमभावःश्रुतौश्रुतः ॥ करोषिजगतांनाथकथमे
वंव्यतिक्रमम् ॥ २८ ॥ त्वयाचनिहतायोहितस्यकोरक्षितोभुवि ॥ सुदर्शनस्यतेजोहिसूर्यकोटिनिभंपरम् ॥ २९ ॥ के
षांसुराणामस्त्रेणतदेवमनिवारितम् ॥ यथासुदर्शनंचैवमस्त्राणांप्रवरंवरम् ॥ ३० ॥ तथाभवांश्चदेवानांसर्वेषामीश्वरःपरः ॥
यथाभवांस्तथाकृष्णोविधातावेधसामपि ॥ ३१ ॥ विष्णुःसत्वगुणाधारःशिवःसत्वाश्रयस्तथा ॥ स्वयंविधातारजसःसृ
ष्टिकर्तापितामहः ॥ ३२ ॥ कालाग्निरुद्रोभगवान्विश्वसंहारकारकः ॥ तमसश्चाश्रयःसोपिरुद्राणांप्रवरोमहान् ॥ ३३ ॥
सएवशंकरांशश्चाप्यन्येरुद्राश्चतत्कलाः ॥ भवांश्चनिर्गुणस्तेषांप्रकृतेश्चपरस्तथा ॥ ३४ ॥ सर्वेषांपरमात्मावैप्राणाविष्णु
स्वरूपिणः ॥ मानसंचस्वयंब्रह्मास्वयंज्ञानात्मकःशिवः ॥ ३५ ॥ प्रवरासर्वशक्तीनांबुद्धिःप्रकृतिरीश्वरी ॥ स्वात्मनःप्र
तिबिंबस्तेजीवःसर्वेषुदेहिषु ॥ ३६ ॥ जीवःस्वकर्मणांभोगीस्वयंसाक्षीभवांस्तथा ॥ सर्वेयांतित्वयिगतेनरदेवेयथानुगाः
॥ ३७ ॥ सत्यःपततिदेहश्चशवोऽस्पृश्यस्त्वयाविना ॥ बुद्धाःसंतोनजानंतिवंचितास्तवमायया ॥ ३८ ॥ त्वांभजंत्येवये
संतोमायामेतांतरंतिते ॥ त्रिगुणाप्रकृतिर्दुर्गावैष्णवीचसनातनी ॥ ३९ ॥ परानारायणीशानीतवमायादुरत्यया ॥
त्वदंशाःप्रतिविश्वेषुब्रह्मविष्णुशिवात्मकाः ॥ ४० ॥ सर्वेषामपिविश्वेषामाश्रयोयोमहान्विराट् ॥ सशेतेचजलेयोगाद्वि
श्वेशोगोकुलेयथा ॥ ४१ ॥ सएववासुर्भगवानतस्यदेवोभवान्परः ॥ वासुदेवइतिख्यातःपुराविद्भिःप्रकीर्तितः ॥ ४२ ॥

त्वमेवकलयासूर्यस्त्वमेवकलयाशशी ॥ कलयाचहुताशश्चकलयापवनःस्वयम् ॥ ४३ ॥ कलयावरुणश्चैवकुबेरश्चयम स्तथा ॥ कलयात्वंमहेंद्रश्चकलयाधर्मएवच ॥ ४४ ॥ त्वमेवकलयाशेषईशानोनैर्ऋतिस्तथा ॥ मुनयोमनवश्चैवग्रहाश्च फलदायकाः ॥ ४५ ॥ कलाकलायाश्चांशेनसर्वेजीवाश्चराचराः ॥ त्वंब्रह्मपरमंज्योतिर्ध्यायंतेयोगिनस्तथा ॥ ४६ ॥ त स्वाद्रियंतेभक्तास्तेध्यायंतेचतदंतरे ॥ नवीननीरदश्यामंपीतकौशेयवाससम् ॥ ४७ ॥ ईषद्धास्यप्रसन्नास्यंभक्तेशंभक्त वत्सलम् ॥ चंदनोक्षितसर्वांगंद्विभुजंमुरलीधरम् ॥ ४८ ॥ मयूरपिच्छचूडंचमालतीमाल्यभूषितम् ॥ अमूल्यरत्ननिर्मा णकेयूरंवलयान्वितम् ॥ ४९ ॥ मणिकुंडलयुग्मेनगंडस्थलविराजितम् ॥ रत्नसारांगुलीयंचक्कणन्मंजीररंजितम् ॥ ॥ ५० ॥ कोटिकंदर्पलीलाभंशरत्कमललोचनम् ॥ शरत्पूर्णेंदुनिंदास्यंचंद्रकोटिसमप्रभम् ॥ ५१ ॥ वीक्षितंसस्मिताभि श्चगोपीनांकोटिकोटिभिः ॥ वयस्यैःपार्षदैर्गोपैःसेवितंश्वेतचामरैः ॥ ५२ ॥ गोपबालकवेषंचराधावक्षःस्थलस्थितम् ॥ ध्यानासाध्यंदुराराध्यंब्रह्मेशशेषवंदितम् ॥ ५३ ॥ सिद्धेंद्रैश्चमुनींद्रैश्चयोगींद्रैःप्रणतंस्तुतम् ॥ वेदानिर्वचनीयंचपरस्वे च्छामयंविभुम् ॥ ५४ ॥ स्थूलस्थूलतमंरूपंसूक्ष्मात्सूक्ष्मतमंपरम् ॥ सत्यंनित्यंप्रशस्तंचप्रकृतेःपरमीश्वरम् ॥ ५५ ॥ निर्लिप्तंचनिरीहंचभगवंतंसनातनम् ॥ एवंध्यात्वाचतेपूताःस्निग्धदूर्वाक्षताचलम् ॥ ५६ ॥ पादपद्मार्चितेपादपद्मेचदा तुमुत्सुकाः ॥ वेदास्तोतुमशक्तास्त्वामशक्तासासरस्वती ॥ ५७ ॥ शेषस्तोतुमशक्तश्चस्वयंभूःशंभुरीश्वरं ॥ गणेशश्चदिनेश श्चमहेंद्रश्चंद्रएवच ॥ ५८ ॥ स्तोतुंनालंधनेशश्चकिमन्येजडबुद्धयः ॥ गुणातीतमनीहंचकिंस्तौमिनिर्गुणंपरम् ॥ ५९ ॥ अपंडितोयमसुरोनसुरःक्षंतुमर्हति ॥ बलेस्तुवचनंश्रुत्वातमुवाचजगत्पतिः ॥ ६० ॥ परिपूर्णतमःश्रीमान्भक्तंचभक्तवत्स

लः ॥ ॥ श्रीभगवानुवाच ॥ ॥ माभैर्वत्सगृहंगच्छसुतलंरक्षितंमया ॥ ६१ ॥ मद्वरेणप्रसादेनत्वत्पुत्रोप्यजरामरः ॥
दर्पहानिंकरिष्यामितस्यमूर्खस्यदर्पिणः ॥ ६२ ॥ प्रल्हादायवरोदत्तोभक्तायचतपस्विने ॥ ममावध्यश्चत्वद्वंशश्चेतिप्रीते
नचेतसा ॥ ६३ ॥ तवपुत्रायदास्यामिज्ञानंमृत्युंजयंपरम् ॥ त्वयाकृतमिदंस्तोत्रंसामवेदोक्तमीप्सितम् ॥ ६४ ॥ पुरा
सनत्कुमारायप्रदत्तंब्रह्मणातथा ॥ सिद्धाश्रमेपुण्यतमेप्रशस्तेसूर्यपर्वणि ॥ ६५ ॥ गौतमायप्रदत्तंचगौर्यामंदाकिनीत
टे ॥ शंकरेणचशिष्यायभक्तायचदयालुना ॥ ६६ ॥ ब्रह्मणेचमयादत्तंशिवायविरजातटे ॥ भृगवेचपुरादत्तंकुमारेणच
धीमता ॥ ६७ ॥ त्वंचदास्यसिवाणायवाणस्तोष्यत्यनेनमाम् ॥ इदंस्तोत्रंमहापुण्यमुपदिश्यगुरोर्मुखात् ॥ ६८ ॥
वृतस्यपूजितस्यापिवस्त्रभूषणचंदनैः ॥ सुस्नातोयःपठेन्नित्यंपूजाकालेचभक्तितः ॥ ६९ ॥ कोटिजन्मार्जितात्पापा
न्मुच्यतेनात्रसंशयः ॥ विपदांखंडनंस्तोत्रंकारणंसर्वसंपदाम् ॥ ७० ॥ वारणंदुःखशोकानांभवाब्धिघोरतारणम् ॥ खं
डनंगर्भवासानांजरामृत्युहरंपरम् ॥ ७१ ॥ बंधनानांचरोगाणांखंडनंभक्तमंडनम् ॥ सस्नातःसर्वतीर्थेषुसर्वयज्ञेषुदीक्षि
तः ॥ ७२ ॥ व्रताव्रतेषुसर्वेषुतपस्वीचतपःसुच ॥ ससत्यंसर्वदानानांफलंचलभतेध्रुवम् ॥ ७३ ॥ लक्षधास्तोत्रपाठेनस्तो
त्रसिद्धिर्भवेन्नृणाम् ॥ सर्वसिद्धिंचलभतेसिद्धस्तोत्रोभवेद्यदि ॥ ७४ ॥ इहलोकेदेवतुल्योप्यंतेयातिहरेःपदम् ॥ ७५ ॥
इतिश्रीब्रह्मवै० म० वाणयुद्धेबलिकृतश्रीकृष्णस्तोत्रंनामोनविंशाधिकशतोऽध्यायः ॥ ११९ ॥ ॥ श्रीनारायणउवाच ॥
अथकृष्णश्चभगवानुद्धवेनबलेनच ॥ दूतंप्रस्थापयामासविधायमंत्रिणंशुभम् ॥ १ ॥ शिवोगणपतिर्यत्रदुर्गादुर्गतिनाशि
नी ॥ कार्तिकेयोभद्रकालीचोग्रचंडाचकोटरी ॥ २ ॥ आगत्यनत्वादूतश्चगणेशंचशिवंशिवाम् ॥ मानवांश्चापिपूज्यां

श्चसमुवाचयथोचितम् ॥ ३ ॥ ॥ दूतउवाच ॥ ॥ बाणमाव्हयतेकृष्णःसंग्रामार्थंमहेश्वर ॥ किंवानिरुद्धमूषांचगृहीत्वा शरणंव्रज ॥ ४ ॥ रणेनिमंत्रितोयोहिनयातिभयकातरः ॥ परत्रनरकंयातिसप्तभिःपितृभिःसहः ॥ ५ ॥ दूतस्यवचनंश्रु त्वासभामध्येयथोचितम् ॥ उवाचपार्वतीदेवीस्वयंशंकरसन्निधौ ॥ ६ ॥ ॥ पार्वत्युवाच ॥ ॥ गच्छबाणमहाभागगृही त्वावदकन्यकां ॥ सर्वस्वंयौतकंदत्वाश्रीकृष्णंशरणंव्रज ॥ ७ ॥ सर्वेषामीश्वरंबीजंदातारंसर्वसंपदां ॥ वरंवरेण्यंशरणंकृ पालुंभक्तवत्सलं ॥ ८ ॥ पार्वतीवचनंश्रुत्वातमूचुस्तेसुरेश्वराः ॥ प्रशशंसुःसभामध्येधन्यधन्येतिसर्वदा ॥ ९ ॥ कोपाविष्ट श्चबाणोयमुत्तस्थौसहसासुरः ॥ सान्हाहिकोधनुष्पाणिःप्रणम्यशंकरंययौ ॥ १० ॥ सर्वैर्निषिध्यमानश्चकंपितोरक्तलो चनः ॥ सान्हाहिकश्चदैत्यानांत्रिकोट्याचमहाबलः ॥ ११ ॥ कुभांडःकूपकर्णश्चनिकुंभःकुंभएवच ॥ सेनापतीश्वराश्चैते ययुःसान्हाहिकास्तथा ॥ १२ ॥ उन्मत्तभैरवश्चैवसंहारभैरवस्तथा ॥ असितांगोभैरवश्चरुरुभैरवएवच ॥ १३ ॥ महाभैर वसंज्ञश्चकालभैरवएवच ॥ प्रचंडभैरवश्चैवक्रोधभैरवएवच ॥ १४ ॥ प्रययुःशक्तिभिःसार्द्धंसर्वेसान्हाहिकाश्चते ॥ काला ग्निरुद्रोभगवान्रुद्रैःसान्नाहिकोययौ ॥ १५ ॥ उग्रचंडाप्रचंडाचचंडिकाचंडनायिका ॥ चंडेश्वरीचचामुंडाचंडीचंडक पालिका ॥ १६ ॥ अष्टौचनायिकाःसर्वाःप्रययुःखर्परान्विताः ॥ कोटरीरत्नयानस्थाशोणितग्रामदेवता ॥ १७ ॥ प्रययौ साप्रफुल्लास्याखड्गखर्परधारिणी ॥ चंद्राणीवैष्णवीशांताब्रह्माणीब्रह्मवादिनी ॥ १८ ॥ कौमारीनारसिंहीचवाराहीवि कटाकृतिः ॥ माहेश्वरीमहामायाभैरवीभीरुरूपिणी ॥ १९ ॥ अष्टौचशक्तयःसर्वारथस्थाःप्रययुर्मुदा ॥ रत्नेंद्रसारयान स्थाःप्रययुर्भद्रकालिका ॥ २० ॥ रक्तवर्णात्रिनयनाजिव्हाललनभीषणा ॥ शूलशक्तिगदाहस्ताखड्गखर्परधारिणी ॥

॥ २१ ॥ प्रययौशूलहस्तश्चवृषभस्थोमहेश्वरः ॥ स्कंदश्चशिखियानस्थःशस्त्रपाणिर्धनुर्धरः ॥ २२ ॥ एवंचप्रययुःसर्वेगणे
शंपार्वतीविना ॥ एभिर्युक्तंमहादेवंदृष्ट्वाचभद्रकालिकाम् ॥ २३ ॥ प्रचक्रेचक्रपाणिश्चसंभाषांचयथोचितां ॥ बाणःशंख
ध्वनिंकृत्वाप्रणम्यपार्वतीश्वरं ॥ २४ ॥ धनुर्दधारसगुणंदिव्यास्त्रेणनियोजितं ॥ बाणंसमुद्यतंदृष्ट्वासात्यकिःपरवीरहा ॥
॥ २५ ॥ निषिध्यमानस्तैःसर्वैःसन्नाहीप्रययौमुदा ॥ बाणश्चिक्षेपदिव्यास्त्रमांछलंनामनारद ॥ २६ ॥ अव्यर्थंग्रीष्ममध्या
न्हमार्तंडाभंसुतीक्ष्णकं ॥ दृष्ट्वास्त्रंसात्यकिःसाक्षात्किंचिन्नम्रोबभूवह ॥ २७ ॥ किंवानदग्धःप्रययौनभोमध्यंसुदारुणं ॥
वन्हिंचिक्षेपबाणंचसात्यकिर्वारुणेनच ॥ २८ ॥ प्रज्वलंतंतालमानंनिर्वाणंचचकारसः ॥ चिक्षेपपावनंबाणःप्रचंडंघो
रमुल्बणम् ॥ २९ ॥ चिच्छेदसात्यकिश्चैवपर्वतास्त्रेणलीलया ॥ नारायणास्त्रंचिक्षेपबाणश्चरणमूर्धनि ॥ ३० ॥ सात्यकि
र्दंडवद्भूमौपपातार्जुनशिक्षया ॥ माहेश्वरंप्रचिक्षेपबाणःशस्त्रविदांवरः ॥ ३१ ॥ सात्यकिर्वैष्णवास्त्रेणप्रचिच्छेदावलीलया
॥ ब्रह्मास्त्रंचापिचिक्षेपबाणश्चरणमूर्धनि ॥ ३२ ॥ क्षणंचकारनिर्वाणंब्रह्मास्त्रेणचसात्यकिः ॥ नागास्त्रंचापिचिक्षेपबा
णोरणविशारदः ॥ ३३ ॥ सात्यकिर्गरुडेनैवसंजहारक्षणेनच ॥ जग्राहशूलमव्यर्थंशंकरस्यसुदारुणं ॥ ३४ ॥ तुष्टावसा
त्यकिर्दुर्गांगलेमाल्यंबभूवह ॥ जग्राहधनुषाबाणोबाणंपाशुपतंतथा ॥ ३५ ॥ बाणंसबाणंजृंभंचसात्यकिश्चचकारह ॥
बाणंतंजृंभितंदृष्ट्वाकार्तिकेयोमहाबलः ॥ ३६ ॥ अर्धचंद्रंचचिक्षेपकामश्चिच्छेदलीलया ॥ गदांचिक्षेपचस्कंदःप्रातःसूर्य
समप्रभां ॥ ३७ ॥ वैष्णवास्त्रेणकामश्चनिर्वाणंचचकारसः ॥ नारायणास्त्रंस्कंदश्चप्राक्षिपच्चत्वरान्वितः ॥ ३८ ॥ पपातदं
डवद्भूमौप्रद्युम्नःकृष्णशिक्षया ॥ स्कंदःशक्तिंचचिक्षेपप्रलयाग्निसमप्रभां ॥ ३९ ॥ कामोनारायणास्त्रेणनिर्वाणंचचकार

तां ॥ ब्रह्मास्त्रंचप्रचिक्षेपकार्तिकोरणमूर्धनि ॥ ४० ॥ ब्रह्मास्त्रेणापिकामश्चनिर्वाणंचचकारसः ॥ जग्राहकार्तिकःकोपाद्दि
व्यंपाशुपतंतथा ॥ ४१ ॥ निद्रास्त्रेणापिमदनोनिद्रितंचचकारतं ॥ कार्तिकंनिद्रितंदृष्ट्वाबाणंचजृंभितंतथा ॥ ४२ ॥ कोपा
त्कामंचसरथंजग्राहभद्रकालिका ॥ क्रोडेकृत्वाचबाणंचस्कंदंचजगतांप्रसूः ॥ ४३ ॥ रणस्थलाच्चप्रययौयत्रैवपार्वती
सती ॥ कार्तिकंबोधयामासबाणंसुस्थंचकारसा ॥ ४४ ॥ सहसासरथःकामोनासारंध्रेणवर्त्मना ॥ बर्हिर्बभूवसंत्रस्तोप्रय
यौचरणस्थलं ॥४५॥ दृष्ट्वाकामंचसरथंजहसुर्यादवास्तदा ॥ सर्वैशैवाश्चतत्रस्थाःशुष्ककंठाभयाकुलाः ॥४६॥ अथबाणः
पुनःक्रुद्धोरथमारुह्यकोपतः ॥ कार्तिकेयश्चभगवान्युद्धायपुनरागतः ॥ ४७ ॥ बाणःपंचशरांश्चैवचिक्षेपरणमूर्धनि ॥ अ
र्धचंद्रेणचिच्छेदबलदेवोमहाबलः ॥ ४८ ॥ रथंबभंजबाणस्यलांगलेनचलांगली ॥ जघानसूतमश्वांश्चमुसलेनावलील
या ॥ ४९ ॥ छेत्तुमुद्यमकुर्वंतंहालिनंचमहाबलं ॥ कालाग्निरुद्रोभगवान्वारयामासलीलया ॥ ५० ॥ रथंकालाग्निरुद्र
स्यबभंजलांगलीरुषा ॥ हलेनसूतमश्वांश्चजघानरणमूर्धनि ॥ ५१ ॥ कालाग्निरुद्रःकोपेनचिक्षेपज्वरमुल्बणम् ॥ बभूवु
र्यादवाःसर्वेज्वराक्रांताहरिंविना ॥ ५२ ॥ तंदृष्ट्वाभगवान्कृष्णःससर्जवैष्णवंज्वरम् ॥ तंचिक्षेपज्वरंहंतुंमाहेशंरणमूर्धनि
॥ ५३ ॥ बभूवज्वरयोर्युद्धंमुहूर्तमतिदारुणम् ॥ वैष्णवज्वरनिष्क्रांतोरणमूर्ध्निपपातसः ॥ ५४ ॥ परंबभूवनिश्चेष्टस्तुष्टाव
माधवंपुनः ॥ ॥ ज्वरउवाच ॥ ॥ प्राणात्रक्षजगन्नाथभक्तानुग्रहविग्रह ॥ ५५ ॥ त्वमात्मापुरुषःपूर्णःसर्वत्रसमतातव
ज्वरस्यवचनंश्रुत्वासंजहारस्वकंज्वरम् ॥ ५६ ॥ माहेश्वरोज्वरोभीतोरणादेवहिनिर्ययौ ॥ बाणश्चपुनरागत्यबाणानांच
सहस्रकम् ॥ ५७ ॥ चिक्षेपमंत्रपूतंचप्रलयाग्निशिखोपमम् ॥ फाल्गुनःशरजालेनवारयामासलीलया ॥ ५८ ॥ चिक्षे

पर्शक्तिबाणश्चग्रीष्मसूर्यसमप्रभां ॥ चिच्छेदलीलयातांचसव्यसाचीमहाबलः ॥ ५९ ॥ सजग्राहपाशुपतंशतसूर्यसम
प्रभं ॥ अत्यर्थमतिघोरंचविश्वसंहारकारकं ॥ ६० ॥ तद्दृष्ट्वाचक्रपाणिश्चचक्रंचिक्षेपदारुणम् ॥ हस्तानांचसहस्रंचसपा
शुपतमुल्बणं ॥ ६१ ॥ चिच्छेदरणमध्येचपपाताचलसिंहवत् ॥ शस्त्रंपाशुपतंचैवययौपशुपतेःकरं ॥ ६२ ॥ अव्यर्थंदारु
णंलोकेप्रलयाग्निशिखोपमम् ॥ बाणरक्तसमूहेनबभूवचमहानदः ॥ ६३ ॥ बाणःपपातनिश्चेष्टोव्यथितोहतचेतनः ॥ तत्रा
जगामभगवान्महादेवोजगद्गुरुः ॥ ६४ ॥ रुरोदागत्यमोहेनबाणंकृत्वास्ववक्षसि ॥ शिवाश्रुपतनेनैवसंबभूवसरोवरं ॥ ६५ ॥
चेतनंकारयामासकरुणासागरप्रभुः ॥ बाणंगृहीत्वाप्रययौयत्रदेवोजनार्दनः ॥ ६६ ॥ चक्रेपद्मार्चितेपादपद्मेबाणसम
र्पणं ॥ तुष्टावजगतांनाथंशक्तीशंचंद्रशेखरं ॥ ६७ ॥ बलिनाचस्तुतंयेनवेदोक्तेनचतेनच ॥ हरिर्मृत्युंजयंज्ञानंददौबाणा
यधीमते ॥ ६८ ॥ करपद्मंददौगात्रेतंचकाराजरामरं ॥ बाणस्तोत्रेणतुष्टावभक्त्याबलिकृतेनच ॥ ६९ ॥ वरांकन्यांस
मानीयरत्नभूषणभूषितां ॥ प्रददौहरयेभक्त्यातत्रैवदेवसंसदि ॥ ७० ॥ गजेंद्राणांपंचलक्षमश्वानांचचतुर्गुणं ॥ दासी
नांचसहस्रंचरत्नभूषणभूषितं ॥ ७१ ॥ सहस्रंकामधेनूनांवत्सयुक्तंचसर्वदं ॥ माणिक्यानांचमुक्तानांरत्नानांशतलक्षकं ॥
॥ ७२ ॥ मणींद्राणांहीरकाणांशतलक्षंमनोहरं ॥ जलभाजनपात्राणिसुवर्णनिर्मितानिच ॥ ७३ ॥ सहस्राणिददौतस्मै
भक्तिनम्रात्मकंधरः ॥ वराणिसूक्ष्मवस्त्राणिवन्हिशुद्धांशुकानिच ॥ ७४ ॥ ददौबाणश्चसर्वाणिस्वभक्त्याशंकराज्ञया ॥ तां
बूलानांचचूर्णानांपूर्णपात्राणिनारद ॥ ७५ ॥ सहस्राणिददौभक्त्यावराणिविविधानिच ॥ कन्यांसमर्पयामासपादपद्मे
हरेरपि ॥ ७६ ॥ रुरोदोच्चैःस्वभक्त्याचपरिहारंचकारसः ॥ कृष्णस्तस्मैवरंदत्वावेदोक्तंचसुभाषितम् ॥ ७७ ॥ शंकरानु

मतेनैवप्रययौद्वारकापुरीम् ॥ गत्वाकन्यांनवोढांतांबाणस्यापिमहात्मनः ॥ ७८ ॥ रुक्मिण्यैप्रददौशीघ्रंदेवक्यैचहरिः स्वयम् ॥ महोत्सवंमंगलंचकारयामासयत्नतः ॥ ७९ ॥ ब्राह्मणान्भोजयामासब्राह्मणेभ्योधनंददौ ॥ ८० ॥ ॥ इति श्रीब्रह्मवैवर्तेश्रीकृष्णजन्मखंडेबाणयुद्धंनामविंशत्यधिकशततमोऽध्यायः ॥ १२० ॥ ॥ नारायणउवाच ॥ ॥ अथ कृष्णःसुधर्मायांनिवसन्त्सगणस्तथा ॥ तत्राजगामविप्रश्चप्रज्वलन्ब्रह्मतेजसा ॥ १ ॥ आगत्यदृष्ट्वातुष्टावभक्त्याचपु रुषोत्तमम् ॥ उवाचमधुरंशांतोभीतोविनयपूर्वकम् ॥ २ ॥ ॥ ब्राह्मणउवाच ॥ ॥ शृंगालोवासुदेवश्चराजेशोमंडले श्वरः ॥ तमुवाचसयद्वाक्यंसावधानंनिशामय ॥ ३ ॥ ॥ शृंगालउवाच ॥ ॥ वैकुंठेवासुदेवोहंदेवेशश्चचतुर्भुजः ॥ लक्ष्मी पतिश्चजगतांधाताधातुश्चपालकः ॥ ४ ॥ ब्रह्मणाप्रार्थितोहंचभारावतरणायच ॥ भुवोभारतवर्षंचतदर्थंगमनंमम ॥ ॥ ५ ॥ वसुदेवसुतःकृष्णःक्षत्रियश्चाप्यहंकृतः ॥ जनंजनेननिर्जित्यदुर्बलंबलिनासह ॥ योधयित्वामहाधूर्तोघातया मासभूपतीन् ॥ ६ ॥ दुर्योधनंजरासंधंभूपमन्यंचदुर्बलम् ॥ भीमेनघातयामासबलिनाल्पेनभूतले ॥ ७ ॥ द्रोणंभीष्मं चकर्णंचयंयमन्यंचभूतले ॥ बलीयसार्जुनेनैवघातयामासलीलया ॥ ८ ॥ यंयमन्यंदुर्बलंचप्रसिद्धमप्रसिद्धकम् ॥ प्रसिद्धेनबलवताघातयामासलीलया ॥ ९ ॥ शिशुपालंदंतवक्त्रंकंसंचचिररोगिणम् ॥ मत्पुत्रंनरकंचैवदुर्बलंनरकंमुरम् ॥ १० ॥ स्वयंजघानसंकेताच्छलेनसहसाबत ॥ नधर्मयुद्धेकपटीसचबालोत्यधार्मिकः ॥ ११ ॥ जघानपूतनांकुब्जांस्त्रीघा तीवस्त्रहेतुना ॥ जघानरजकंशिष्टमशिष्टश्चप्रतारकः ॥ १२ ॥ हिरण्यकशिपुंदैत्यंहिराण्याक्षंमहाबलम् ॥ मधुंचकैटभंचै वहत्वाहंसृष्टिरक्षकः ॥ १३ ॥ अहमेवस्वयंब्रह्माप्यहमेवस्वयंशिवः ॥ अहंविष्णुश्चजगतांपातादुष्टापहारकः ॥ १४ ॥

अंशेनकलयासर्वेमनवोमुनयस्तथा ॥ स्वयंनारायणोहंचनिर्गुणःप्रकृतेःपरः ॥ १५ ॥ लज्जयाकृपयाचैवमित्रबुद्ध्याक्ष
माकृता ॥ यद्गतंतद्गतंभद्रयुद्धंकुरुमयासह ॥ १६ ॥ शृणोमिदूतद्वारेणत्वयतीवोच्चैरहंकृतम् ॥ उचितंदमनंतस्याप्युन्नता
नांनिपातनम् ॥ १७ ॥ राज्ञश्चपरमोधर्मोप्यहंशास्ताभुवोधुना ॥ शंखंचक्रंगदांपद्मंगृहीत्वाहंचतुर्भुजः ॥ १८ ॥ द्वारकां
तांगमिष्यामियुद्धायसगणःस्वयम् ॥ युद्धंकुरुयदीच्छास्तिमामांचशरणंव्रज ॥ १९ ॥ यदिमायास्यतिममशरणंशर
णागतः ॥ भस्मीभूतंकरिष्यामिद्वारकांचक्षणेनच ॥ २० ॥ सबलंचसपुत्रंत्वांसगणंचसबांधवम् ॥ क्षणेनदग्धुंशक्तोह
मसहायेनलीलया ॥ २१ ॥ तपस्विनंचवृद्धंचजित्वायुद्धेचशंकरम् ॥ शक्रंभग्नाशंजित्वाचरोगिणंब्रह्मशापतः ॥ २२ ॥
मत्तोसिवीरमात्मानंमन्यमानस्त्वमेवच ॥ स्त्रीजितोहिवृथार्थंचपारिजातस्यहेतुना ॥ २३ ॥ लंपटोयोनिलुब्धश्चराधा
धीनश्चगोकुले ॥ अधुनाकिंकरसमःसत्यादीनांचयोषिताम् ॥ २४ ॥ इत्येवमुक्त्वाविप्रश्चतूष्णींभूयस्थितोमुने ॥ श्रीकृ
ष्णःसगणःश्रुत्वाभृशमुच्चैर्जहाससः ॥ २५ ॥ भोजयित्वाचसंपूज्यब्राह्मणंचचतुर्विधम् ॥ निनायरजनींदुःखात्वाक्
शल्यमानसज्वरात् ॥ २६ ॥ प्रभातेरथमारुह्यसगणःसत्वरंमुदा ॥ लीलामात्रेणप्रययौशृंगालोनृपतिर्यथा ॥ २७ ॥ श्रु
त्वाशृंगालोवार्तांतांकृत्रिमश्चचतुर्भुजः ॥ आजगामहरेःस्थानंयुद्धायसगणःस्वयम् ॥ २८ ॥ कृष्णश्चक्रेचसंभाषांमित्र
बुद्ध्याचलौकीकीम् ॥ आश्लेषंमधुरालापंस्निग्धनेत्रश्चसस्मितः ॥ २९ ॥ राजानिमंत्रणंचक्रेकृष्णोनस्वीचकारतत् ॥
उवाचकृष्णभीतश्चत्यक्तादंभंचदर्शनात् ॥ ३० ॥ ॥ शृंगालउवाच ॥ ॥ चक्रेणमच्छिरंछित्वासुशीघ्रंद्वारकांव्रज ॥
पापःपततुदेहोयमनित्योनश्वरस्तथा ॥ ३१ ॥ अहंमुभद्रोतेद्वारिजयश्चविजयोयथा ॥ सर्वंजानासिसर्वज्ञमाविलंबंकुरु

प्रभो ॥ ३२ ॥ लक्ष्मीशापेनभ्रष्टोहंकालःपूर्णोबभूवमे ॥ शतवर्षेणशापांतेयास्यामिभवनंतव ॥ ३३ ॥ श्रीकृष्णउवाच ॥
पूर्वंमांमित्रप्रहरपश्चाद्युद्धंकरोम्यहम् ॥ सर्वंजानामिवैकुंठंगच्छवत्सयथासुखम् ॥ ३४ ॥ शृंगालोदशबाणांश्चचिक्षेप
माधवंप्रति ॥ तेप्रणम्यययुःशीघ्रमाकाशंकालरूपिणः ॥ ३५ ॥ गदांचिक्षेपराजासप्रलयाग्निशिखोपमाम् ॥ कृष्णांग
स्पर्शमात्रेणबभंजचक्षणेनच ॥ ३६ ॥ धनुश्चिक्षेपखड्गंचकालरूपंसुदारुणम् ॥ कृष्णांगस्पर्शमात्रेणबभंजचक्षणेनच
॥ ३७ ॥ दृष्ट्वानिरस्तंराजानमित्युवाचकृपानिधिः ॥ गृहंगत्वासुतीक्ष्णंचमित्रास्त्रमानयेतिच ॥ ३८ ॥ शृंगालउवाच
नात्माकाशोस्त्रविद्धश्चकिंयुद्धमात्मनासह ॥ मामुद्धरभवाब्धेश्चधरोद्धारणकारण ॥ ३९ ॥ भवाब्धिविषमंनाथविषयंचवि
षाधिकम् ॥ छिंधिमेनिगडंमायांमोहजालंस्वकर्मणः ॥ ४० ॥ कर्मणामीश्वरस्त्वंचविधाताधातुरेवच ॥ दाताशुभफला
नांचप्रदातासर्वसंपदाम् ॥ ४१ ॥ कारणंप्राक्तनानांचतेषांचखंडनेक्षमः ॥ यामिगेहंचवैकुंठंतवैवद्वारसत्तमम् ॥ ४२ ॥
त्यक्त्वाचनश्वरंदेहंप्राकृतंपांचभौतिकम् ॥ मित्रस्यस्तवनंश्रुत्वावचनंचसुधोपमम् ॥ ४३ ॥ रुरोदसमरेतत्रकृपयाचकृ
पानिधिः ॥ बभूवतत्रसहसाकृष्णनेत्राश्रुबिंदुना ॥ ४४ ॥ दिव्यंबिंदुसरोनामतीर्थानांप्रवरंपरम् ॥ तत्तोयस्पर्शमात्रेणजी
वन्मुक्तोभवेन्नरः ॥ ४५ ॥ सप्तजन्मार्जितात्पापान्मुच्यतेनात्रसंशयः ॥ ॥ श्रीभगवानुवाच ॥ ॥ कथमेतादृशीबुद्धि
र्मित्रतेनिर्मलंमनः ॥ ४६ ॥ दूतद्वाराकथंचोक्तंनिष्ठुरंदारुणंवचः ॥ ॥ नारदउवाच ॥ ॥ गणेशपूजनाख्यानंपुराणेषुच
दुर्बलम् ॥ ४७ ॥ श्रुतंतद्ब्रह्मणोवक्त्रात्सामान्यंचसमासतः ॥ महिमानंगणपतेःसर्वपूज्येश्वरस्यच ॥ ४८ ॥ व्यासेनश्रोतु
मिच्छामियोगींद्राणांगुरोर्गुरुः ॥ सिद्धाश्रमेमहापूजाविणोकस्थैःकृतापरा ॥ ४९ ॥ राधामाधवयोस्तत्रपुनःसंमीलनं

पुरा ॥ अतीतेवर्षशतकेश्रीदाम्नःशापमोक्षणे ॥ ५० ॥ आदौचकारपूजांचसाचराधाकथंमुने ॥ स्थितेषुचसुरेंद्रेषुब्रह्मवि
ष्णुशिवादिषु ॥ ५१ ॥ नागेंद्रेचस्थितेशेषेनागेषुचमहत्सुच ॥ राजेंद्रेषुचभूमौचबलिष्ठेष्वासुरेवच ॥ ५२ ॥ गंधर्वेषुचर
क्षःसुचान्येषुबलवत्सुच ॥ विस्तरेणमहाभागतन्मांव्याख्यातुमर्हसि ॥ ५३ ॥ ॥ श्रीनारायणउवाच ॥ ॥ त्रैलोक्येपृ
थिवीधन्यामान्यापुण्यवतीसती ॥ तत्रभारतवर्षचकर्मणांफलदंशुभम् ॥ ५४ ॥ धन्यंयशस्यंपूज्यंचपुण्यक्षेत्रेचभारते
सिद्धाश्रमंमहापुण्यक्षेत्रंमोक्षप्रदंशुभम् ॥ ५५ ॥ सनत्कुमारोभगवान्तत्रसिद्धोबभूवह ॥ स्वयंविधातातत्रैवतप्त्वासिद्धो
बभूवह ॥ ५६ ॥ योगींद्राश्चमुनींद्राश्चसिद्धेंद्राःकपिलादयः ॥ शतक्रतुर्महेंद्रश्चतत्रकृत्वाबभूवह ॥ ५७ ॥ तेनसिद्धाश्रमंना
मसर्वेषामपिदुर्लभम् ॥ अधिष्ठानंगणेशस्यतत्रैवसततंमुने ॥ ५८ ॥ अमूल्यरत्ननिर्माणगणेशप्रतिमांशुभाम् ॥ वैशा
खीपूर्णिमायांचपूजांकुर्वंतिदेवताः ॥ ५९ ॥ नागाश्चमानवाश्चैवदैत्यागंधर्वराक्षसाः ॥ सिद्धेंद्राश्चमुनींद्राश्चयोगींद्राःस
नकादयः ॥ ६० ॥ तत्राजगामशंभुश्चपार्वत्यासहशंकरः ॥ सगणःकार्तिकेयश्चस्वयंब्रह्माप्रजापतिः ॥ ६१ ॥ तत्राजगा
मशेषश्चनागेंद्रैःसहसत्वरम् ॥ तत्राजग्मुःसुराःसर्वेमनवोमुनयस्तथा ॥ ६२ ॥ आजग्मुस्तेनृपाःसर्वेपूजार्थंत्दृष्टमानसाः
॥ आययौभगवान्कृष्णोद्वारकावासिभिःसह ॥ ६३ ॥ आजगामतथानंदःसार्द्धंगोकुलवासिभिः ॥ गोपीनांत्रिंशत्कोटी
भिर्गोलोकवासिभिःसह ॥ ६४ ॥ गजेंद्रकोटितुल्याभिर्बलिष्ठाभिःसहालिभिः ॥ आययौसुंदरीराधाकृष्णप्राणाधिदेवता
॥ ६५ ॥ रासेश्वरीसुरभिश्चशतवर्षेगतेसती ॥ सुस्नातासुदतीशुद्धाधृत्वाधौतेचवाससी ॥ ६६ ॥ संयतासानिराहारागत्वा
चमणिमंडपम् ॥ सुप्रक्षालितपादाब्जाकांताभुवनपावनी ॥ ६७ ॥ श्रीकृष्णप्राप्तिकामंचसुसंकल्पंविधायच ॥ गंगोद

केनहेरंबंस्नापयामासभक्तितः॥ ६८ ॥ ध्यानंचसामवेदोक्तंचकारशुक्लपुष्पतः ॥ माताचतुर्णांवेदानांवसोश्चजगतामपि
॥ ६९ ॥ बुद्धिरूपाभगवतीज्ञानिनांजननीपरा॥ ध्यानात्मकंस्वपुत्रंतंपरध्यानंचकारसा ॥ ७० ॥ खर्वंलंबोदरंस्थूलंज्व
लंतंब्रह्मतेजसा ॥ गजवक्त्रंवन्हिवर्णमेकदंतमनंतकम् ॥ ७१ ॥ सिद्धानांयोगिनामेवज्ञानिनांचगुरोर्गुरुम्॥ ध्यानंमु
नींद्रैर्देवेंद्रैर्ब्रह्मेशशेषसंज्ञकैः ॥ ७२ ॥ सिद्धेंद्रैर्मुनिभिःसद्भिर्भगवंतंसनातनम्॥ ब्रह्मस्वरूपंपरमंमंगलंमंगलालयम् ॥
॥ ७३ ॥ सर्वविघ्नहरंशांतंदातारंसर्वसंपदाम्॥ भवाब्धिमायापोतेनकर्णधारंचकर्मिणाम् ॥ ७४ ॥ शरणागतदीनार्तप
रित्राणपरायणम् ॥ ध्यायेद्ध्यानात्मकंसाध्यंभक्तेशंभक्तवत्सलम् ॥ ७५ ॥ इतिध्यात्वास्वशिरसिदत्वापुष्पंपुनःस
ती॥ सर्वांगशोधनंन्यासंवेदोक्तंचचकारसा ॥ ७६ ॥ पुनश्चध्यात्वाध्यानेनतेनैवशुभदायिना॥ ददौपुष्पंपादपद्मेराधा
लंबोदरस्यच ॥ सप्ततीर्थोदकेनैवशीतेनवासितेनच ॥ ददौपाद्यंपादपद्मेतैःपद्मादिभिरार्चिते ॥ ७८ ॥ दूर्वाक्षतैःशुक्लपु
ष्पैःसुगंधिचंदनोदकैः ॥ अर्घ्यंददौतच्छिरसिस्वयंगोलोकवासिनी ॥ ७९ ॥ सचंदनस्निग्धमाल्यंपारिजातस्यसुंदरम्
ददौगलेगणेशस्यस्वयंरासेश्वरीमुदा॥ ८० ॥ कस्तूरीकुंकुमाक्तंचसुगंधिस्निग्धचंदनम् ॥ सर्वांगेप्रददौतस्यवृंदावनवि
नोदिनी॥ ८१ ॥ सुगंधिशुक्लपुष्पंचसुगंधिचंदनार्चितम्॥ ददौतस्यपदांभोजेमहापद्मालयासती ॥ ८२ ॥ सुगंधियुक्तं
धूपंचपूतैर्वस्तुभिरन्वितम्॥ ददौकृष्णप्रियातस्मैजगतामीश्वरायच ॥ ८३ ॥ दीपंघृतप्रदीप्तंचध्वांतविध्वंसकारणम्॥
ददौतस्मैसुरेशायपरमाद्यासनातनी ॥ ८४ ॥ नैवेद्यंविविधंरम्यंसुस्वादुंसुमनोहरम्॥ चोष्यंचर्व्यंलेह्यपेयंसुधातुल्यंचतु
र्विधम्॥ ८५॥ फलानिचसुपक्वानित्रैलोक्येदुर्लभानिच॥ मधुराणिचमूलानिग्राम्यारण्यानिनारद ॥ ८६ ॥ तानित्वा

नंत्यसंख्यानितिलानांलड्डुकानिच ॥ सुपक्वानिसुरम्याणिस्वादूनिसुरसानिच ॥ ८७ ॥ यवगोधूमचूर्णानांपक्वानिपि
ष्टकानिच ॥ घृताक्तानिचरम्याणिशर्करासहितानिच ॥ ८८ ॥ स्वस्तिकानांलड्डुकानिस्थूलानिसुंदराणिच ॥ भ्रष्टद्रव्यं
चविविधमक्षतंशर्करान्वितम् ॥ ८९ ॥ घृतकुल्यांदुग्धकुल्यांमधुकुल्यांमनोहराम् ॥ गुडस्यदध्नःकुल्यांचपायसानांतथै
वच ॥ ९० ॥ पिष्टकानांस्वस्तिकानांरंभाणांराशिरेवच ॥ मिष्टव्यंजनयुक्तानिशाल्यन्नानिशुभानिच ॥ ९१ ॥ ददौतस्मै
सुरेशायकृष्णप्राणाधिदेवता ॥ अमूल्यरत्ननिर्माणंरम्यंसिंहासनंवरम् ॥ ९२ ॥ ददौविघ्नविनाशायविरजातटवासिनी ॥
सूक्ष्मवस्त्रयुगंरम्यममूल्यंवन्हिशुद्धकम् ॥ ९३ ॥ ददौशैलात्मजायैवशतशृंगनिवासिनी ॥ तांबूलंचवरंरम्यंकर्पूरादि
सुवासितम् ॥ ९४ ॥ सर्वसंपत्प्रदात्रेचवृषभानसुताददौ ॥ सप्ततीर्थोदकंशुद्धंसुपूतंचसुवासितम् ॥ ९५ ॥ पानार्थंचज
लंतस्मैददौगोपीश्वरीमुदा ॥ अमूल्यंदुर्लभंचैवविशुद्धंश्वेतचामरम् ॥ ९६ ॥ ददौतस्मैपरेशायमूलप्रकृतिरीश्वरी ॥ अ
मूल्यरत्ननिर्माणंमुक्तामाणिक्यहीरकैः ॥ ९७ ॥ परिष्कृतंसुतल्पंचपुष्पचंदनचर्चितम् ॥ सितसूक्ष्मांशुकेनैवपरितश्चपरि
ष्कृतम् ॥ ९८ ॥ ददौशिवात्मजायैवकृष्णवक्षस्थलस्थिता ॥ दत्वाचकामधेनुंचसवत्सांवांछितप्रदाम् ॥ ९९ ॥ कृत्वातीवप
रीहारंवृंदापुष्पांजलिंददौ ॥ दिव्येनानेनमनुनासबीजेनोज्वलेनच ॥ १०० ॥ ददौषोडशोपचारंकालिंदीकुलवासिनी ॥
ओंगंगौंगणपतयेविघ्नविनाशिनेस्वाहा ॥ १ ॥ इत्येवमेवमंत्रंचगाणेशंषोडशाक्षरम् ॥ साजजापसहस्रंचपरंकल्पतरुं
वरम् ॥ २ ॥ तुष्टावपरयाभक्त्याभक्तिनम्रात्मकंधरा ॥ साश्रुनेत्रांपुलकितास्तोत्रेणकौतुकेनच ॥ ३ ॥ ॥ श्रीराधिको
वाच ॥ ॥ परंधामपरंब्रह्मपरेशंपरमीश्वरम् ॥ विघ्ननिघ्नकरंशांतंपुष्टंकांतमनंतकम् ॥ ४ ॥ सुरासुरेंद्रैःसिद्धेंद्रैःस्तुतंस्तौमि

परात्परम् ॥ सुरपद्मदिनेशंचगणेशंमंगलायनम् ॥ ५ ॥ इदंस्तोत्रंमहापुण्यंविघ्नशोकहरंपरम् ॥ यःपठेत्प्रातरुत्थायस र्वविघ्नात्प्रमुच्यते ॥ १०६ ॥ ॥ इतिश्रीब्रह्मवै०म० श्रीकृष्णजन्म० एकविंशत्यधिकशततोऽध्यायः ॥ १२१ ॥ श्रीनाराय णउवाच ॥ ॥ राधासंपूज्यविधिनास्तुत्वालंबोदरंसती ॥ अमूल्यरत्ननिर्माणंसर्वांगभूषणंददौ ॥ १ ॥ राधायाःस्तवनं श्रुत्वापूजांदृष्ट्वाचवस्तुच ॥ उवाचमधुरंशांतःशांतांत्रैलोक्यमातरम् ॥ २ ॥ ॥ श्रीगणेशउवाच ॥ ॥ तवपूजाजगन्मा तर्लोकशिक्षाकरीशुभे ॥ ब्रह्मस्वरूपाभवतीकृष्णवक्षस्थलस्थिता ॥ ३ ॥ यत्पादपद्ममतुलंध्यायंतेतेसुदुर्लभम् ॥ सुराब्र ह्मेशशेषाद्यामुनींद्राःसनकादयः ॥ ४ ॥ जीवन्मुक्ताश्चभक्ताश्चसिद्धेंद्राःकपिलादयः ॥ तस्यप्राणाधिदेवीत्वंप्रियाप्राणा धिकापरा ॥ ५ ॥ वामांगनिर्मिताराधादक्षिणांगश्चमाधवः ॥ महालक्ष्मीर्जगन्मातातववामांगनिर्मिता ॥ ६ ॥ वसोःसर्व निवासस्यप्रसूस्त्वंपरमेश्वरी ॥ वेदानांजगतामेवमूलप्रकृतिरीश्वरी ॥ ७ ॥ सर्वाःप्रकृतिकामातःसृष्ट्यांचेत्त्वद्विभूतयः ॥ विश्वानिकार्यरूपाणित्वंचकारणरूपिणी ॥ ८ ॥ प्रलयेब्रह्मणःपातेतन्निमेषोहरेरपि ॥ आदौराधांसमुच्चार्यपश्चात्कृष्णं परात्परम् ॥ ९ ॥ सएवपंडितोयोगीगोलोकंयातिलीलया ॥ व्यतिक्रमेमहापापीब्रह्महत्यांलभेद्ध्रुवम् ॥ १० ॥ जगतां भवतीमातापरमात्मापिताहरिः ॥ पितुरेवगुरुर्मातापूज्यावंद्यापरात्परा ॥ ११ ॥ भजतेदेवमन्यंवाकृष्णंवासर्वकारणम् ॥ पुण्यक्षेत्रेमहामूढोयदिनिंदतिराधिकाम् ॥ १२ ॥ वंशहानिर्भवेत्तस्यदुःखशोकमिहैवच ॥ पच्यतेनिरयेघोरेयावच्चंद्रदि वाकरौ ॥ १३ ॥ गुरुश्चज्ञानोद्गिरणाज्ज्ञानंस्यान्मंत्रतंत्रयोः ॥ सचमंत्रश्चतत्तंत्रंभक्तिःस्याद्युवयोर्यतः ॥ १४ ॥ निषेव्य मंत्रंदेवानांजीवीजन्मनिजन्मनि ॥ भक्तिर्भवतिदुर्गायाःपादपद्मेसुदुर्लभे ॥ १५ ॥ निषेव्यमंत्रंशंभोश्चजगतांकारण

स्यच ॥ तदाप्राप्नोतियुवयोःपादपद्मंसुदुर्लभम् ॥ १६ ॥ युवयोःपादपद्मंचदुर्लभंप्राप्यपुण्यवान् ॥ क्षणार्धंषोडशांशं चनहिमुंचतिदैवतः ॥ १७ ॥ भक्त्याचयुवयोर्मंत्रंगृहीत्वावैष्णवादपि ॥ स्तवंवाकवचंवापिकर्ममूलनिकृंतनम् ॥ १८ ॥ योजयेत्परयाभक्त्यापुण्यक्षेत्रेचभारते ॥ पुरुषाणांसहस्रंचस्वात्मनासार्द्धमुद्धरेत् ॥ १९ ॥ गुरुमभ्यर्च्यविधिवद्वस्त्रालंकारचंदनैः ॥ कवचंधारयेद्योहिविष्णुतुल्योभवेद्ध्रुवम् ॥ २० ॥ यद्दत्तंवस्तुमेमातस्तत्सर्वंसार्थकंकुरु ॥ देहिविप्रायमत्प्रीत्या तदाभोक्ष्यामिसांप्रतम् ॥ २१ ॥ देवेदेयानिदानानिदेवेदेयाचदक्षिणा ॥ तत्सर्वंब्राह्मणेदद्यात्तदानंत्यायकल्पते ॥ २२ ॥ ब्राह्मणानांमुखंराधेदेवानांमुखमुख्यकम् ॥ विप्रभुक्तंचयद्द्रव्यंप्राप्नुवंत्येवदेवताः ॥ २३ ॥ विप्रांश्चभोजयामासतत्सर्वंराधिकासती ॥ बभूवतत्क्षणादेवप्रीतोलंबोदरोमुने ॥ २४ ॥ एतस्मिन्नंतरेदेवाब्रह्मेशशेषसंज्ञकाः ॥ आययुर्वटमूलं चदेवपूजार्थमेवच ॥ २५ ॥ तत्रगत्वाशिवचरोदेवान्देवीरुवाचसः ॥ श्रीकृष्णंशुष्ककंठश्चभयभीतश्चरक्षकः ॥ २६ ॥ ॥ रक्षकउवाच ॥ ॥ गणेशंपूजयामाससर्वादौचशुभक्षणे ॥ वृषभानसुताराधाप्रकृत्यस्वस्तिवाचनम् ॥ २७ ॥ सहितासाबलवतीगोपीत्रिशतकोटिभिः ॥ वारितोहंबलिष्ठाभिर्युष्मांश्चकथयामितत् ॥ २८ ॥ सर्वादौपूजयेद्योहिसोनंतंफलमालभेत् ॥ मध्येमध्यविधंपुण्यंशेषेस्वल्पमितिस्मृतम् ॥ २९ ॥ देवेंद्रेषुमुनींद्रेषुदेवस्त्रीषुस्थितासुच ॥ गोपीभिश्च सहतयाराधयापूजितःपरः ॥ ३० ॥ दूतवाक्यंसमाकर्ण्यजहसुःसर्वदेवताः ॥ मुनयोमनवश्चैवराजानोदेवयोषितः ॥ ३१ ॥ रुक्मिण्याद्यारमण्यश्चयादेव्योविस्मयंययुः ॥ सरस्वतीचसावित्रीपार्वतीपरमेश्वरी ॥ ३२ ॥ रोहिणीचसतीसंज्ञास्वाहाद्यादेवयोषितः ॥ मुदिताःप्रययुःसर्वामुनिपत्न्यःपतिव्रताः ॥ ३३ ॥ मुनयोमनवःसर्वेदेवाश्चापिनरास्तथा ॥ श्रीकृष्णःसगणैः

सार्धंयेचान्येप्रययुर्मुदा ॥३४॥ तेसर्वैर्विविधैर्द्रव्यैः पूजांचक्रुःशुभक्षणे॥ बलिष्ठादुर्बलाश्चैवंक्रमेणचपृथक्पृथक् ॥३५॥
लड्डुकानांचराशीनांशतकोटिर्बभूवह ॥ शर्कराणांतदर्द्धंचस्वस्तिकानांतथैवच ॥३६॥ अन्नानांभव्यवस्तूनांशतकोटिर्बभू
वह॥ असंख्यानिफलान्येवस्वादूनिमधुराणिच ॥ ३७॥ मधुकुल्यादुग्धकुल्यादधिकुल्याघृतस्यच ॥ बभूवुःशतसंख्या
श्चत्रैलोक्यानांचपूजने ॥३८॥ पूजांकृत्वातुतेसर्वेसमूषुश्चसुखासने ॥ पार्वतीपरमप्रीत्याराधास्थानंसमाययौ ॥ ३९॥
साराधापार्वतींदृष्ट्वासमुत्थायजवेनच॥ यथायोग्यांचसंभाषांचकारसादरंमुदा ॥४०॥ आश्लेषणंचुंबनंचबभूवचपरस्प
रम्॥ उवाचमधुरंदुर्गाराधांकृत्वास्ववक्षसि॥ ४१॥ पार्वत्युवाच ॥ किंवाप्रश्नंकरिष्यामित्वांराधांमंगलालयाम् ॥ गताते
विरहज्वालाश्रीदाम्नःशापमोक्षणे ॥४२॥ सततंमन्मनःप्राणास्त्वय्येवमयितेतथा॥ नत्वेवमावयोर्भेदःशक्तिःपुरुषयोस्तथा
॥ ४३ ॥ येत्वांनिंदंतिमद्भक्तास्त्वद्भक्ताश्चापिमामपि ॥ कुंभीपाकेचपच्यंतेयावच्चंद्रदिवाकरौ ॥ ४४ ॥ राधामाधवयोर्भे
दंयेकुर्वंतिनराधमाः ॥ वंशहानिर्भवेत्तेषांपच्यंतेनरकेचिरम् ॥ ४५ ॥ यांतिसूकरयोनिंचपितृभिःशतकैःसह ॥ षष्टिवर्षस
हस्राणिविष्ठायांकृमयस्तथा ॥ ४६ ॥ त्वयैवपूजितःपुत्रोनमयाचगणेश्वरः ॥ सर्वादौसर्वपूज्योयंयथातवतथामम ॥
॥ ४७ ॥ यावज्जीवनपर्यंतंनविच्छेदोभविष्यति ॥ राधामाधवयोर्देविमुग्धधावल्ययोर्यथा ॥ ४८ ॥ सिद्धाश्रमेमहाती
र्थेपुण्यक्षेत्रेचभारते ॥ निर्विघ्नंलभगोविंदंसंपूज्यविघ्नखंडनम् ॥ ४९ ॥ रासेश्वरीत्वंरसिकाश्रीकृष्णोरसिकेश्वरः ॥ वि
दग्धायाविदग्धेनसंगमोगुणवान्भवेत् ॥ ५० ॥ श्रीदाम्नःशापनिर्मुक्ताशतवर्षांतरेसती ॥ कुरुष्वमद्वरेणाद्यकृष्णेनसहसं
गमम् ॥ ५१ ॥ ममाज्ञयादुर्लभयासुवेषंकुरुसंदरि ॥ सुदुर्लभःकामिनीनांसत्पुंसासहसंगमः ॥ ५२ ॥ चक्रुःसुवेषंराधा

याः प्रियाल्पश्चशिवाज्ञया ॥ रत्नसिंहासनेरम्येवासयामासुरीश्वरीं ॥ ५३ ॥ पुरतोरत्नमालासारत्नमालांगलेददौ ॥ राधा
यादक्षिणेहस्तेक्रीडापद्मंमनोहरम् ॥ ५४ ॥ ददौपद्ममुखीपादपद्मयुग्मेप्यलक्तकम् ॥ प्रददौसुंदरीगोपीसिंदूरंसुंदरंवर
म् ॥ ५५ ॥ चंदनेनसमायुक्तंसीमंताधस्थलोज्वलम् ॥ सुचारुकबरींरम्यांचकारमालतीसती ॥ ५६ ॥ मनोहरांमुनीनां
चमालतीमाल्यभूषिताम् ॥ कस्तूरीकुंकुमाक्तंचचारुचंदनपत्रकम् ॥ ५७ ॥ स्तनयुग्मेसुकठिनेचकारचंदनंसती ॥ चा
रुचंपकपुष्पाणांमालांगंधमनोहराम् ॥ ५८ ॥ मालावतीददौतस्यैप्रफुल्लांनवमल्लिकाम् ॥ रतीपुरसिकागोपीरत्नभूष
णभूषिताम् ॥ ५९ ॥ तांचकाराऽतिरसिकांवरांरतिरसोत्सुकाम् ॥ शरत्पद्मदलाभंचलोचनंकज्जलोज्वलम् ॥ ६० ॥ कृत्वा
ददौसुललितंवस्त्रंचललितासती ॥ महेंद्रेणप्रदत्तंचपारिजातप्रसूनकम् ॥ ६१ ॥ सुगंधियुक्तंतस्याश्चपारिजातंकरेददौ ॥
सुशीलंमधुरोक्तंचभर्तुःपार्श्वेयथोचितम् ॥ ६२ ॥ शिक्षांचकारनीतिंचसुशीलागोपिकासती ॥ स्त्रीणांचषोडशकलांविप
त्तौविस्मृतांतयोः ॥ ६३ ॥ स्मरणंकारयामासराधामाताकलावती ॥ शृंगारविषयोक्तंचवचनंचसुधोपमम् ॥ ६४ ॥ स्म
रणंकारयामासभगिनीचसुधामुखी ॥ कमलानांचंपकानांदलेचंदनचर्चिते ॥ ६५ ॥ चकाररतितल्पंचकमलाचाशुको
मलं ॥ चारुचंपकपुष्पंचकृष्णार्थंपुटकस्थितम् ॥ ६६ ॥ चकारचंदनाक्तंचस्वयंचंपावतीसती ॥ पुष्पंकेलिकदंबानांस्त
वकंचमनोहरम् ॥ ६७ ॥ कदंबमालांकृष्णार्थंविधमानंचकारसा ॥ तांबूलंचवरंरम्यंकर्पूरादिसुवासितम् ॥ ६८ ॥ कृष्णप्रि
याचकृष्णार्थंचकारवासितंजलम् ॥ एतस्मिन्नंतरेसर्वमाश्रमंसजलस्थलम् ॥ ६९ ॥ साक्षाद्गोरोचनाभंचददृशुर्मुनयःसु
राः ॥ तेसर्वेविस्मयंगत्वापपृच्छुःकृष्णमीश्वरम् ॥ ७० ॥ उवाचभगवांस्तांश्चसर्वज्ञःसर्वकारणः ॥ ॥ श्रीभगवानुवाच ॥

अभिशप्ताचश्रीदाम्नाभ्रष्टशोभाचराधिका ॥ ७१ ॥ सर्वंज्ञानंविसस्मारमद्विच्छेदज्वरातुरा ॥ विमुक्तेवर्षशतकेज्ञानंसस्मार
सासती ॥ ७२ ॥ सिद्धाश्रमंचपीतांबरासेश्वर्याश्चतेजसा ॥ परमाल्हादकंतेजश्चंद्रकोटिसमप्रभम् ॥ ७३ ॥ सुखदृश्यंचसु
खदंचक्षुषाप्राणिनामपि ॥ तच्छ्रुत्वापरमाश्चर्यंमुनयोमनवस्तथा ॥ ७४ ॥ देव्यश्चसर्वदेवास्तेब्रह्मेशानादयस्तथा ॥ ज
वेगत्वाततस्थानंभक्तिनम्रात्मकंधराः ॥ ७५ ॥ सर्वेजनास्तेददृशुस्त्रैलोक्यस्थाश्चराधिकां ॥ श्वेतचंपकवर्णाभामतुलांसु
मनोहरां ॥ ७६ ॥ मोहिनींमानसानांचमुनीनामूर्ध्वरेतसां ॥ सुकेशींसुंदरींश्यामांन्यग्रोधपरिमंडलां ॥ ७७ ॥ नितंबकठि
नश्रोणीस्तनयुग्मोन्नताननां ॥ कोटींदुनिंदितास्यांतांसस्मितांसुदतींसतीं ॥७८॥ कज्जलोज्ज्वलरूपांचशरत्कमललोच
नां ॥ महालक्ष्मींबीजरूपांपरमाद्यांसनातनीं ॥ परमात्मस्वरूपस्यप्राणाधिष्ठातृदेवतां ॥ स्तुतांचपूजितांचैवपरांचपरमा
त्मने ॥ ८० ॥ ब्रह्मस्वरूपांनिर्लिप्तांनित्यरूपांचनिर्गुणां ॥ विश्वानुरोधात्प्रकृतिंभक्तानुग्रहविग्रहाम् ॥ ८१ ॥ सत्यस्व
रूपांशुद्धांचपूतांपतितपावनीम् ॥ सुतीर्थपूतांसत्कीर्तिंविधात्रींवेधसामपि ॥ ८२ ॥ महत्प्रियांचमहतींमहाविष्णोश्चमा
तरम् ॥ रासेश्वरेश्वरींरम्यांरसिकांरसिकेश्वरीम् ॥ ८३ ॥ वन्हिशुद्धांशुकाधानांस्वेच्छारूपांशुभालयाम् ॥ गोपीभिःस
प्तभिःशश्वत्सेवितांश्वेतचामरैः ॥ ८४ ॥ चतसृभिःप्रियालीभिःपादपद्मोपसेविताम् ॥ अमूल्यरत्ननिर्माणभूषणोच्चैर्वि
भूषिताम् ॥ ८५ ॥ चारुकुंडलयुग्मेनश्रुतिगंडस्थलोज्वलाम् ॥ सुनासांगजमुक्ताहांखगेंद्रचंचुनिंदिताम् ॥ ८६ ॥ कुंकु
मालक्तकस्तूरीस्निग्धचंदनचर्चिताम् ॥ दधानांसुकपोलांचकोमलांगींसुकामुकीम् ॥ ८७ ॥ गजेंद्रगामिनींरामांकमनी
यांसुकामिनीम् ॥ कामास्त्रजयरूपांचकामकाम्यलयांवराम् ॥ ८८ ॥ क्रीडाकमलमम्लानंपारिजातप्रसूनकम् ॥ अमू

ल्यरत्ननिर्माणंदधानांदर्पणोज्ज्वलम् ॥ ८९ ॥ नानारत्नविचित्राढ्यरत्नसिंहासनस्थिताम् ॥ पादपद्मार्चितंकृष्णपाद
पद्मंचमंगलम् ॥ ९० ॥ हृत्पद्मेध्यायमानांचकृष्णस्यपरमात्मनः ॥ कर्मणामनसावाचास्वप्नेजागरणेपिच ॥ ९१ ॥ त
त्प्रीतिंप्रेमसौभाग्यंस्मरंतींनित्यनूतनम् ॥ भावानुरक्तसंसिक्तांशुद्धभक्तांपतिव्रताम् ॥ ९२ ॥ धन्यांमान्यांगौरवर्णांश
श्वद्वक्षस्थलस्थिताम् ॥ प्रियासुप्रियभक्तेषुसुप्रियांप्रियवादिनीम् ॥ ९३ ॥ कृष्णवामांगसंभूतामभेदांगुणरूपयोः ॥ गो
लोकवासिनींदेवदेवींसर्वोपरिस्थिताम् ॥ ९४ ॥ वृषभानसुताख्यांतांपुण्यक्षेत्रेचभारते ॥ गोपीश्वरींगुप्तरूपांसिद्धिदांसि
द्धिरूपिणीम् ॥ ९५ ॥ ध्यानासाध्यांदुराराध्यांवंदेसद्भक्तवंदिताम् ॥ ध्यानेध्यानेनराधायाध्यायंतेध्यानतत्पराः ॥ ९६ ॥
इहैवजीवन्मुक्तास्तेपरत्रकृष्णपार्षदाः ॥ दृष्ट्वाब्रह्माचसर्वांदौतुष्टावपरमेश्वरीम् ॥ ९७ ॥ स्वयंविधाताजगतांमातरंवेध
सामपि ॥ ॥ ब्रह्मोवाच ॥ ॥ षष्टिर्वर्षसहस्राणिदिव्यानिपरमेश्वरि ॥ ९८ ॥ पुष्करेचतपस्तप्तंपुण्यक्षेत्रेचभारते ॥ त्व
त्पादपद्ममधुरमधुलुब्धेनचेतसा ॥ ९९ ॥ मधुव्रतेनलोभेनप्रेरितेनमयासति ॥ तथापिनमयालब्धंत्वत्पादपदमीप्सित
म् ॥ १०० ॥ नदृष्टमपिस्वप्नेपिजातावागशरीरिणी ॥ वाराहेभारतेवर्षेपुण्येवृंदावनेवने ॥ १ ॥ सिद्धाश्रमेगणेशस्यपाद
पद्मंचद्रक्ष्यसि ॥ राधामाधवयोर्दास्यंकुतोविषयिणस्तव ॥ २ ॥ निवर्तस्वमहाभागपरमेतत्सुदुर्लभम् ॥ इतिश्रुत्वा
निवृत्तोहंतपसेभग्नमानसः ॥ ३ ॥ परिपूर्णंतदधुनावांछितंतपसःफलम् ॥ ॥ श्रीमहादेवउवाच ॥ ॥ पादपद्मार्चितंपाद
पद्मंयस्यसुदुर्लभम् ॥ ४ ॥ ध्यायंतेध्याननिष्ठाश्चशश्वद्ब्रह्मादयःसुराः ॥ मुनयोमनवश्चैवसिद्धाःसंतश्चयोगिनः ॥ ५ ॥
द्रष्टुंनैवक्षमाःस्वप्नेभवतीतस्यवक्षसि ॥ ॥ अनंतउवाच ॥ ॥ [illegible]श्ववेदमाताचपुराणानिचसुव्रते ॥ ६ ॥ अहंसरस्वती

संतःस्तोतुंनालंचसंततम् ॥ अस्माकंस्तवनेयस्यभ्रूभंगंचसुदुर्लभम् ॥ ७ ॥ तवैवभर्त्सनेभीतश्चावयोरंतरंहरिः ॥ एवंदे
वाश्चदेव्यश्चचान्येयेचसमागताः ॥८ ॥ प्रणतास्तुष्टुवुःसर्वैमुनिमन्वादयस्तथा॥ लज्जयानम्रवक्त्राश्चरुक्मिण्याद्याश्चयो
षितः॥ ९ ॥ मलीमसंचचक्रुस्ताःश्वासेनरत्नदर्पणम् ॥ मृततुल्यासत्यभामानिराहाराकृशोदरी ॥१०॥ मनसोप्यभिमानं
चसर्वंतत्याजनारद ॥ १११ ॥ ॥ इतिश्रीब्र॰म॰ सिद्धाश्रमतीर्थयात्राप्रसंगेगणेशपूजनंनामब्रह्मेशशेषादिकृतंराधिका
स्तोत्रंद्वाविंशत्यधिकशतोऽध्यायः ॥ १२२ ॥ ॥ नारदउवाच ॥ ॥ गणेशपूजनादेवराधास्तोत्रात्परंविभो ॥ बभूवींकर
हस्यंवातन्मेव्याख्यातुमर्हसि ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ ॥ गणेशपूजनेतीर्थेयेदेवाश्चसमाययुः ॥ मुनयश्चापियो
गींद्रावसंतोवटमूलके ॥ २ ॥ वसुदेवोदेवकीचपरमादरपूर्वकम् ॥ पप्रच्छशंभुंब्रह्माणमनंतंमुनिपुंगवान् ॥ ३ ॥ भवेभवा
ब्धितरणमावयोरुत्तमागतिः॥ शीघ्रंब्रूतमहाभागादीनयोर्दीनबांधवाः ॥ ४॥ भवाब्धितरणेतथ्यांतत्रयूयंचनाविकाः॥
नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः ॥ ५ ॥ यज्ञरूपाणिपुण्यानिव्रतान्यनशनानिच ॥ तपांसिनानादानानिविप्र
देवार्चनानिच ॥ ६ ॥ चिरंपुनंतिसर्वाणिदर्शनादेववैष्णवाः ॥ सतांचविष्णुभक्तानांरजसांस्पर्शमात्रतः ॥ ७ ॥ पूतानांपा
दपद्मानांसद्यःपूतावसुंधरा ॥ तीर्थानिचपवित्राणिसमुद्राःपर्वतास्तथा ॥ ८ ॥ सुरादर्शनमिच्छंतिपातकेंधनपातकम् ॥
सोज्ञानीनैवबुबुधेज्ञानंचज्ञानिनासह ॥ ९ ॥ परमंस्वादुरूपंचदधिदुग्धंरसंयथा ॥ तथाकृष्णस्यतातोहंसंगीसुचिरमेवच ॥
॥ १० ॥ तथैवदेवकीमाताज्ञानिनांचगुरोर्गुरुम् ॥ वसुदेववचःश्रुत्वाप्रहस्यशंकरःस्वयम् ॥ ११ ॥ चतुर्णामपिवेदानामु
वाचजनकोगुरुः ॥ ॥ महादेवउवाच ॥ ॥ सन्निकर्षोज्ञानिनांचाप्यनादरणकारणम् ॥ १२ ॥ यांतिगंगांभसापूतास्ती

र्थान्यन्यानिसिद्धये ॥ वासुदेवस्यतातोयंवसुदेवश्चपंडितः ॥ १३ ॥ ज्ञानिनःकश्यपस्यांशोवसोस्तातस्यचात्मनः ॥ पृ
च्छतिज्ञानमस्मांश्चकृष्णांगान्पुत्रबुद्धितः ॥ १४ ॥ अहोदुर्गामहामायाज्ञानिनामपिमोहिनी ॥ विष्णुमायादुराराध्यानसा
ध्याजगतामपि ॥ १५ ॥ वयंचमोहिताःशश्वद्वेदानांजनकस्तथा ॥ ब्रह्माकृष्णंपरीक्षेतमोहितस्तस्यमायया ॥ १६ ॥
ध्यायतेयत्पदांभोजंतपसाजीवनावधि ॥ इंद्रेषुदशलक्षेष्वप्यधिकाष्टशतेषुच ॥ १७ ॥ पातेषुब्रह्मणःपातेनिमेषोमाधव
स्यच ॥ सहतेनेंद्रयुद्धंचपारिजातस्यहेतुना ॥ १८ ॥ पारिजाततरुंदत्वामायाशक्रश्चरक्षितः ॥ यज्ज्ञानमज्ञिनामेवतत्वं
वाविषयात्मकम् ॥ १९ ॥ नहिंकिंचित्तदज्ञानंतत्साध्यानांसदैवहि ॥ प्राणिनामात्मनोज्ञानमस्माकंज्ञानमस्तिच ॥२०॥
तदूर्ध्वंतत्समंनैवकृष्णंपृच्छशुभाशुभम् ॥ ब्रह्मणश्चचतुर्यामंकल्पंकल्पविदोविदुः ॥ २१ ॥ सप्तकल्पांतजीवीचमार्कंडेयो
महामुनिः ॥ अष्टौनवतिशक्रेषुपातेषुपतनंमुनेः ॥ २२ ॥ ततःप्राप्तंहरेर्दास्यंमुनिनातपसःफलात् ॥ प्रलयेब्रह्मणःपातेप
तनंलोमशस्यच ॥ २३ ॥ दिक्पालानांग्रहाणांचतदायुश्चिरजीविनाम् ॥ अन्येषामपिदेवानांमुनीनामूर्ध्वरेतसाम् ॥२४॥
तदेवायुश्चरुद्राणांमांचमृत्युंजयंविना ॥ प्रलयेचविधेःपातोशिवलोकेप्यहंशिवः ॥ २५ ॥ ब्रह्मभालोद्भवःशंभुःसर्वादि
गर्गभाषणम् ॥ कृष्णवामांगसंभूतायथाराधातथैवच ॥ २६ ॥ तथैवदुर्गालक्ष्मीश्चसावित्रीचसरस्वती ॥ आदित्योप्य
दितेःपुत्रःकायव्यूहेनद्वादश ॥ २७ ॥ तथैवचमहेंद्रश्चकायव्यूहाश्चतुर्दश ॥ तथैववसवश्चाष्टौरुद्राश्चैकादशैवते ॥ २८ ॥
मनुपातेचेंद्रपातोविषयात्पतनंभवेत् ॥ समाययुश्चसर्वेषांनिधनंप्रलयेपिच ॥ २९ ॥ प्रलयेदर्शयामासब्रह्मांडेचजलप्लु
ते ॥ ब्रह्माणंचस्वलोकंचस्वात्मानंशक्तिभिश्चमाम् ॥३०॥ सर्वेषांमूलरूपश्चसर्वेशःकृष्णएवच ॥ भजपुत्रंराजसूयेयज्ञेशं

यज्ञकारणम् ॥ ३१ ॥ विधिवद्दक्षिणांदत्वाभवाब्धिंतरयादव ॥ मुक्तिस्तेनास्तिनिर्वाणंविषयीकश्यपोभवान् ॥ ३२ ॥
नतेदास्यंभक्तधनमदितिर्देवकीतथा ॥ व्रजसर्गभोगबीजंस्वस्थानममरालयम् ॥ ३३ ॥ शिवस्यवचनंश्रुत्वासंयतश्च
शुभक्षणे ॥ तत्रसंभृतसंभारोराजसूयंचकारसः ॥ ३४ ॥ वसुदेवस्यहव्यंचसाक्षाच्चजगृहुःसुराः ॥ यत्रसाक्षाच्चयज्ञेशो
यज्ञोयंदक्षिणासह ॥ ३५ ॥ पूर्णाहुतिंदत्तवंतंवसुदेवमुवाचसः ॥ सनत्कुमारोभगवान्वासुदेवाज्ञयामुने ॥ ३६ ॥ सन
त्कुमारउवाच ॥ ॥ सर्वस्वंदक्षिणांदेहितूर्णंलक्ष्मीपतेःपितः ॥ सार्थकंकुरुकर्मैदंवेदोक्तंवचनंश्टणु ॥ ३७ ॥ दक्षिणांवि
प्रमुद्दिश्यतत्कालंचेन्नदीयते ॥ मुहूर्तेतुव्यतीतेसादक्षिणाद्विगुणाभवेत् ॥ ३८ ॥ वासरेचबहिर्भूतेभवेत्सापिचतुर्गुणा ॥
त्रिरात्रेसमतीतेतुषड्गुणादक्षिणाभवेत् ॥ ३९ ॥ पक्षांतेतुशतगुणामासांतेतुचतुर्गुणा ॥ षण्मासेप्यधिकेन्यूनेसाहस्रंच
गुणीतथा ॥ ४० ॥ वर्षांतेसालक्षगुणाब्रह्मणोक्तंचयादव ॥ उभौचनरकंयातःकर्मकर्तृपुरोहितौ ॥ ४१ ॥ वसुदेवश्चत
च्छ्रुत्वासर्वस्वमुत्ससर्जसः ॥ अधिकारांश्चसाल्हादोवासुदेवाज्ञयातथा ॥ ४२ ॥ अमूल्यानांचरत्नानांदशकोटिमनुत्तमाम्
॥ ददौगर्गायसर्वादौस्वयंलक्ष्मीपतेःपिता ॥ ४३ ॥ शतकोटिंमणींद्राणांस्वर्णानांतच्चतुर्गुणम् ॥ माणिक्यानांचमुक्ता
नांहीरकाणांतथैवच ॥ ४४ ॥ रौप्यंप्रवालंपरमंस्वर्णपात्राणियानिच ॥ स्वस्त्रीणांस्ववधूनांचाप्यमूल्यरत्नभूषणम् ॥ ४५ ॥
श्वेतचामरलक्षंचलक्षंचरत्नदर्पणम् ॥ कामधेनुगणंसर्वंशतकोटिगजानपि ॥ ४६ ॥ शतकोटिर्गजेंद्राणामश्वानांतच्चतुर्गु
णम् ॥ यद्धनंयादवानांचराज्ञोराजानुमोदनात् ॥ ४७ ॥ ग्रामाणांशतलक्षंचससस्यंफलितंतरुम् ॥ धान्याचलानांलक्षं
चशाल्यन्नानांतथैवच ॥ ४८ ॥ पायसंपिष्टकंचैवमिष्टान्नंचसुधोपमम् ॥ स्वस्तिकानांतिलानांचरम्याणिलड्डुकानिच ॥

॥ ४९ ॥ दध्नांमधूनांदुग्धानांगुडानांहविषामपि ॥ कुल्यानांशतकंदत्वापरिहारंचकारसः ॥ ५० ॥ सकर्पूरंचतांबूलंसुशी तंवासितंजलम् ॥ सुगंधिचंदनंचैवपारिजातस्यमालिकाम् ॥ ५१ ॥ आसनानिचरम्याणिवन्हिशुद्धांशुकानिच ॥ र त्ननिर्माणतल्पानिपुष्पाणिचफलानिच ॥ ५२ ॥ प्रददौब्राह्मणेभ्यश्चप्रफुल्लवदनेक्षणः ॥ देवांश्चभोजयामासब्राह्म णानांमुखैःशुभैः ॥ ५३ ॥ देवाश्चमुनयोरात्रौस्वरामाभिश्चरेमिरे ॥ प्रभातेप्रययुःसर्वेश्रीकृष्णानुमतेनच ॥ ५३ ॥ यादवा प्रययुःसर्वेद्वारकांकृष्णपालिताम् ॥ अमूल्यरत्नपूर्णांचरुक्मिणीदर्शनेनच ॥ ५५ ॥ ॥ इतिश्रीब्रह्मवै० म० श्रीकृष्णज न्मखंडेत्रयोविंशत्यधिकशततोऽध्यायः ॥ १२३ ॥ श्रीनारायणउवाच ॥ ॥ गणेशपूजनंकृत्वामाधवोयादवैःसह ॥ देवै र्मुनिभिरन्यैश्चदेवीभिःसहनारद ॥ १ ॥ अंशेनदेवोदेवीभिरुक्मिण्याद्याभिरेवच ॥ प्रययौद्वारकांरम्यांतस्थौसिद्धाश्रमेस्व यम् ॥ २ ॥ कृत्वासुप्रीतिसंभाषांसार्द्धंगोलोकवासिभिः ॥ गोपैःसुत्दद्भिर्नंदेनमात्रागोप्यायशोदया ॥ ३ ॥ उवाचमात रंतातंसुनीतंचयथोचितं ॥ गोपांश्चगोकुलस्थांश्चबंधुवर्गांश्चसांप्रतं ॥ ४ ॥ श्रीभगवानुवाच ॥ गच्छनंदव्रजंनंदतातप्रा णस्यवल्लभ ॥ मातर्यशोदेत्वमपिपरमार्येयशस्विनी ॥ ५ ॥ भुक्त्वाकालावशेषंचगच्छगोकुलमुत्तमम् ॥ सालोक्यमुक्तिं दास्यामिसार्द्धंगोकुलवासिभिः ॥ ६ ॥ इत्युक्त्वाभगवान्कृष्णःपित्रोरनुमतेनच ॥ जगामराधिकास्थानंनंदश्चगोकुलंत था ॥ ७ ॥ ददर्शराधांरुचिरांमुक्ताहारांचसस्मिताम् ॥ यथाद्वादशवर्षीयांशश्वत्सुस्थिरयौवनाम् ॥ ८ ॥ रत्नोच्चैरासन स्थांचगोपीत्रिशतकोटिभिः ॥ आवृतांवेत्रहस्ताभिःसस्मिताभिश्चसांप्रतम् ॥ ९ ॥ दृष्ट्वाचदूरतोराधाश्रीकृष्णंप्राणवल्ल भा ॥ शिशुवेषंसुवेषंचसुंदरेशंचसस्मितम् ॥ १० ॥ नवीनजलदश्यामंपीतकौशेयवाससम् ॥ चंदनोक्षितसर्वांगंरत्नभूषण

भूषितम् ॥ ११ ॥ मयूरपिच्छचूडंचमालतीमाल्यशोभितम् ॥ ईषद्धास्यप्रसन्नास्यंभक्तानुग्रहविग्रहम् ॥ १२ ॥ क्रीडाकम
लमम्लानंधृतवंतंमनोहरम् ॥ मुरलीहस्तविन्यस्तंसुप्रशस्तंचदर्पणम् ॥ १३ ॥ जवेनचसमुत्थायगोपीभिःसहसादरम् ॥
प्रणम्यपरयाभक्त्यातुष्टावपरमेश्वरम् ॥ १४ ॥ राधिकोवाच ॥ अद्यमेसफलंजन्मजीवितंचसुजीवितम् ॥ यद्दृष्टामुख
चंद्रंतेसुस्निग्धंलोचनंमनः ॥ १५ ॥ पंचप्राणाश्वस्निग्धाश्वपरमात्माचसुप्रियः ॥ उभयोर्हर्षबीजंचदुर्लभंबंधुदर्शनं ॥ १६ ॥
शोकार्णवेनिमग्नाहंप्रदग्धाविरहानलैः ॥ तांदृष्ट्वामृतदृष्ट्याचसुषिक्ताद्यसुशीलता ॥ १७ ॥ शिवाशिवप्रदाहंचशिवबी
जात्वयासह ॥ शिवस्वरूपानिश्चेष्टाप्यदृष्टाचत्वयाविना ॥ १८ ॥ त्वयितिष्ठतिदेहेचदेहीश्रीमान्शुचिःस्वयं ॥ सर्वशक्ति
स्वरूपाचशिवरूपोगतेत्वयि ॥ १९ ॥ स्त्रीपुंसोर्विरहोनाथसामान्यश्वसुदारुणः ॥ यांत्येवशक्तिभिःप्राणाविच्छेदात्परमात्म
नः ॥ २० ॥ इत्युक्त्वाराधिकादेवीपरमात्मानमीश्वरं ॥ स्वासनेवासयामासकृत्वापादार्चनंमुदा ॥ २१ ॥ रत्नसिंहासनेश्रीमा
नुवासराधयासह ॥ गोपीभिःसहितःशश्वत्सेवितःश्वेतचामरैः ॥ २२ ॥ चंदनासाददौगात्रेसुगंधिचंदनंहरेः ॥ सस्मितारत्न
मालासारत्नमालांगलेददौ ॥ २३ ॥ पादपद्मार्चितेपादपद्मेपद्मावतीसती ॥ अर्घ्यंददौसासजलंदूर्वापुष्पंचचंदनम् ॥ २४ ॥
मालतीमालतीमाल्यंचूडायांचहरेर्ददौ ॥ चंपापुष्पस्यपुटकंददौचपार्वतीसती ॥ २५ ॥ पारिजातंचहरयेपारिजातंददौ
मुदा ॥ सकर्पूरंचतांबूलंवासितंशीतलंजलं ॥ २६ ॥ ददौकदंबमालासाकदंबमालिकांशुभाम् ॥ क्रीडाकमलमम्लानममू
ल्यंरत्नदर्पणं ॥ २७ ॥ ददौहस्तेहरेरेवकमलासासुकोमला ॥ वरुणेनपुरादत्तंवस्त्रयुग्मंचसुंदरं ॥ २८ ॥ साक्षाद्गोरोचनाभं
चसुंदरीहरयेददौ ॥ वधुपात्रंवधुस्तस्मैमधुरंमधुपूर्णकम् ॥ २९ ॥ सुधापूर्णंसुधापात्रंददौभक्त्यासुधामुखी ॥ चकार

पुष्पशय्यांचगोपीचंदनचर्चिताम् ॥ ३० ॥ अम्लानमालतीपुष्पमालाजालविभूषिताम् ॥ रत्नेंद्रसारनिर्माणमंदिरेसुम
नोहरे ॥ ३१ ॥ मणींद्रमुक्तामाणिक्यहीरहारविभूषिते ॥ कस्तूरीकुंकुमाक्तेनवायुनासुरभीकृते ॥ ३२ ॥ रत्नप्रदीपशत
कैर्ज्वलद्भिश्चसुदीपिते ॥ धूपितैःसततंधूपैर्नानावस्तुसमन्वितैः ॥ ३३ ॥ कृत्वाशय्यांरतिकरींययुर्गोप्यश्चसस्मिताः ॥ दृ
ष्ट्वारहसितल्पंचसुरम्यंसुमनोहरं ॥ ३४ ॥ माधवोराधयासार्धंविवेशरतिमंदिरम् ॥ नानाप्रकारहास्यंचपरिहारंस्मरोचि
तम् ॥ ३५ ॥ द्वयोर्बभूवतल्पेचमदनातुरयोस्तथा ॥ माल्यंददौचकृष्णायतांबूलंचसुवासितम् ॥ ३६ ॥ कस्तूरीकुंकुमा
क्तंचचंदनंश्यामवक्षसि ॥ चारुचंपकपुष्पंचचूडायांप्रददौसती ॥ ३७ ॥ सहस्रदलसंसक्तक्रीडापद्मंकरेददौ ॥ प्रक्षिप्यमुर
लींहस्तात्प्रददौरत्नदर्पणं ॥ ३८ ॥ पारिजातस्यकुसुमम्लानंपुरतोददौ ॥ उवाचमधुरंराधारहस्यंमधुरंवचः ॥ ३९ ॥
सस्मितासस्मितंशांतंकांतंकांतामनोहरं ॥ श्रीराधिकोवाच ॥ निष्फलंमंगलप्रश्नंमंगलंमंगलालये ॥ ४० ॥ सर्वमंगलबी
जेचमांगल्येमंगलप्रदे ॥ तथापिकुशलप्रश्नंसांप्रतंसमयोचितम् ॥ ४१ ॥ लौकिकोव्यवहारोपिवेदेभ्योबलवांस्तथा ॥ कु
शलंरुक्मिणीकांतसत्यभामेशसांप्रतम् ॥ ४२ ॥ महेंद्रेणसमंयुद्धंलीलयाचयदाज्ञया ॥ पारिजाततरुंस्वर्गादुत्पाट्य
चामरावतीं ॥ ४३ ॥ गत्वाविजित्यदेवांश्चतस्यैदत्तमितिश्रुतम् ॥ पुण्यकंचकृतंतेनपारिजातेनसुव्रतम् ॥ ४४ ॥ त्वामेव
साध्यंकांतंचसंपूर्णंदक्षिणांददौ ॥ ब्रह्मेशशेषासाध्यस्त्वंतयासाध्यःकृतःकथम् ॥ ४५ ॥ सर्वाभ्यःकामिनीभ्यश्चसत्यभा
मांविशेषिच ॥ रुक्मिण्याःप्रेमसौभाग्यमतिरिक्तंचगौरवम् ॥ ४६ ॥ अयंमानंचधन्यायांसत्यायांसततंश्रुतं ॥ सत्यंजा
म्बवतीकांतवदमांचसुनिश्चितं ॥ ४७ ॥ तासुसर्वासुकांतासुकस्यास्तेप्रेमचाधिकम् ॥ शृंगारेसर्वभावेवातासुकारसिकाप

रा ॥ ४८ ॥ त्वयिस्निग्धाविदग्धाकातासुधन्यातिसुव्रता ॥ साध्वीभावानुरक्तायाभार्यांपातिपतिश्वसः ॥ ४९ ॥ प्रेमातिरि
क्तंस्त्रीपुंसोस्त्रैलोक्येषुसुदुर्लभम् ॥ रसिकास्त्रीविजानातिसतीगुणवतीपतिं ॥ ५० ॥ गुणज्ञंरसिकंशूरंसुशीलंसुरतौसदा ॥
दूराद्धावतिपद्मार्थंमधुलोभान्मधुव्रतः ॥ ५१ ॥ भेकस्तन्नहिजानातितन्मूर्ध्निपादमुत्सृजेत् ॥ यंत्रीजानातिसंगीतरसंयं
त्रंचनैवच ॥ ५२ ॥ दुग्धस्वादंविदग्धश्चनदर्वीनैवभाजनं ॥ परिपक्वफलास्वादंजानंतिभोगिनःसुखं ॥ ५३ ॥ एकत्राव
स्थिताःशश्वन्नाकिंचित्फलिनोयथा ॥ सुशीतलजलास्वादंविजानंतितृषालवः ॥ ५४ ॥ नचवापीनचघटश्चेत्कुत्रावस्थि
तोयथा ॥ भोगिनोहिविजानंतिशालिस्वादुरसंपरम् ॥ ५५ एकत्रावस्थितंचेत्तुनक्षेत्रंभाजनंयथा ॥ बुबुधेचंदनाघ्राणं
चंदनार्थींचभोगवित् ॥ ५६ ॥ नगर्दभोभारवाहीनतस्यपात्रिकायथा ॥ यंनजानंतिवेदाश्चब्रह्मेशानादयस्तथा ॥ ५७ ॥
योगिनोमुनयःसिद्धास्तंकिंजानंतियोषितः ॥ सौभाग्यंगौरवंप्रेमदुर्लभंनित्यनूतनं ॥ ५८ ॥ योषितांचपरंनैवचूर्णीभूतं
क्षणेनच ॥ अत्युच्छ्रितोनिपतनंप्राप्नोत्येवध्रुवंप्रभो ॥ ५९ ॥ आराद्विपत्तिबीजंचवैष्णवानांविहंसनम् ॥ श्रीदामाचम
याशप्तस्त्वद्भक्तोभक्तवत्सलः ॥ ६० ॥ एतादृशीविपत्तिर्मेपुत्रश्रीदामशापतः ॥ ईश्वरःकस्यवाबंधुःप्रियोवाविप्रियस्त
था ॥६१॥ सततंभक्तिसाध्यश्चयोभक्तश्चतदीश्वरः॥ वेदाश्चवैदिकाःसंतःपुराणानिवदंतिच ॥ ६२॥ राधायामाधवःसाध्यो
भगवानितिनिष्फलं ॥ जित्वाचसगणंशंभुंबाणस्यभुजकृंतनम् ॥ ६३ ॥ कृत्वाचरुक्मिणीपौत्रःसमानीतःसभार्यकः ॥
अहोत्वयिसमायातेरुक्मिणीकिमुवाचह ॥ ६४ ॥ प्रेमस्थितंसमानंतेकिंविवृद्धंचगौरवम् ॥ कुरुपांडवयुद्धेनकुरवोनिह
तास्त्वया ॥ ६५ ॥ पांडवार्थेतथाभूपाःकसाम्यंपरमात्मनः ॥ साक्षान्महेंद्रजातस्यकौंतेयस्यार्जुनस्यच ॥ ६६ ॥ राजमं

डलमध्यस्थोभवानेवहिसारथिः॥ तेनभक्तेनशुद्धेनभीष्मेणचमहात्मना॥६७॥ लज्जितेनकिमुक्तंतेमहतीषुसभासुच॥ देवैरपिकथंदृष्टोब्रह्मेशशेषसंज्ञकैः ॥ ६८ ॥ भक्तासिंहैर्मृतैःसर्वैर्नचोक्तंकिंचिदेवसः॥ यश्चानिर्वचनीयश्चवेदेषुचचतुर्षुच॥ ॥ ६९ ॥ पुराणेष्वितिहासेषुप्रकृतेःपरईश्वरः॥ निर्गुणश्चनिरीहश्चनिर्लिप्तःसर्वकर्मणाम्॥ ७० ॥ कर्मणांसाक्षिरूपश्चभ क्तानुग्रहविग्रहः॥ परंब्रह्मपरंज्योतिःपरमेशःपरात्परः ॥ ७१ ॥ परमात्माचसर्वेषांसूतोनररथस्थितः॥ त्वयाकुब्जाचसं भुक्तावृद्धाक्षत्रियकामिनी ॥ ७२ ॥ अपुत्रिणीचाधिकांगीमूलास्पृश्याचप्राक्तनात्॥ त्वयाचनिहतःकंसोमातुलःकेन हेतुना॥ ७३ ॥ आयास्यतीतिकृत्वाचगतंनपुनरागतम्॥ निहत्ययादवान्सर्वान्विभज्यद्वारकांपुरीं॥ ७४॥ त्वांनिबध्य समानेतुमीश्वरीवारिताजनैः॥ इत्युक्त्वाराधिकादेवीभृशमुच्चैरुरोदसा॥ ७५॥ मूर्छांसंप्रापसहसानिर्निश्वासाबभूवह॥ गोप्योगवाक्षजालस्थाःशुश्रुवुर्ददृशुस्तथा॥ ७६॥ दृष्ट्वातामाययुःसर्वाऊचूराधामृतेतिच॥ उच्चैस्तारुरुदुःसर्वाःक्रोडे कृत्वाचराधिकाम्॥ ७७॥ ऊचुस्तारक्षरक्षेतिहरेनरहरेप्रभो॥ गोप्यऊचुः॥ किंकृतंकिंकृतंकृष्णत्वयाराधामृताचनः॥ ॥ ७८ ॥ राधांजीवयभद्रंतेयास्यामःकाननंवयम्॥ अन्यथास्त्रीवधंतुभ्यंदास्यामःसर्वयोषितः॥ ७९ ॥ गोपीनांवचनं श्रुत्वाराधिकायाश्चमाधवः॥ उवाचजीवयामाससुधादृष्ट्याचनारद॥ ८० ॥ उत्तस्थौराधिकादेवीरुदंतीमानिनीसती॥ गोप्यस्तांबोधयामासुःक्रोडेकृत्वापुनःपुनः ॥ ८१॥ श्रीकृष्णउवाच॥ शृणुराधेप्रवक्ष्यामिज्ञानमाध्यात्मिकंपरम्॥ य च्छ्रुत्वाहालिकोमूर्खःसद्योभवतिपंडितः ॥ ८२ ॥ जात्याहंजगतांस्वामीकिंरुक्मिण्यादियोषिताम्॥ कार्यकारणरूपो हंव्यक्तोराधेपृथक्पृथक्॥ ८३ ॥ एकात्माहंचविश्वेषांजात्याज्योतिर्मयःस्वयम्॥ सर्वप्राणिषुव्यक्तयाचाप्याब्रह्मादि

तृणादिषु ॥ ८४ ॥ एकस्मिंश्च भुक्तवतिनतुष्टोन्योजनस्तथा ॥ मध्यात्मनिर्गतेप्येकोमृतोप्यन्यःसुजीवति ॥ ८५ ॥ जा
त्याहंकृष्णरूपश्चपरिपूर्णतमःस्वयम् ॥ गोलोकेगोकुलेरम्येक्षेत्रेवृंदावनेवने ॥ ८६ ॥ द्विभुजोगोपवेषश्चस्वयंराधापतिः
शिशुः ॥ गोपालैर्गोपिकाभिश्चसहितःकामधेनुभिः ॥ ८७ ॥ चतुर्भुजोहंवैकुंठेद्विधारूपःसनातनः ॥ लक्ष्मीसरस्वतीकांतः
सततंशांतविग्रहः ॥ ८८ ॥ यन्मानसीसिंधुकन्यामर्त्यलक्ष्मीपतिर्भुवि ॥ श्वेतद्वीपेचक्षीरोदेतत्रापिचचतुर्भुजः ॥ ८९ ॥
अहंनारायणर्षिश्चनरोधर्मःसनातनः ॥ धर्मवक्ताचधर्मिष्ठोधर्मवर्त्मप्रवर्तकः ॥ ९० ॥ शांतिर्लक्ष्मीस्वरूपाचधर्मिष्ठाचप
तिव्रता ॥ अत्रतस्याःपतिरहंपुण्यक्षेत्रेचभारते ॥ ९१ ॥ सिद्धेशःसिद्धिदःसाक्षात्कपिलोहंसतीपतिः ॥ नानारूपधरोहंचव्य
क्तिभेदेनसुंदरि ॥ ९२ ॥ अहंचतुर्भुजःशश्वद्द्वार्वत्यांरुक्मिणीपतिः ॥ अहंक्षीरोदशायीचसत्यभामागृहेशुभे ॥ ९३ ॥
अन्यासांमंदिरेहंचकायव्यूहात्पृथक्पृथक् ॥ अहंनारायणर्षिश्चफाल्गुनस्यास्यसारथिः ॥ ९४ ॥ सनरर्षिर्धर्मपुत्रोमदं
शोबलवान्भुवि ॥ तपसाराधितस्तेनसारथ्येहंचदुष्करे ॥ ९५ ॥ यथात्वंराधिकादेवीगोलोकेगोकुलेतथा ॥ वैकुंठेचमहा
लक्ष्मीर्भवतीचसरस्वती ॥ ९६ ॥ भवतीमर्त्यलक्ष्मीश्चक्षीरोदशायिनःप्रिया ॥ धर्मपुत्रवधूस्त्वंचशांतिर्लक्ष्मीस्वरूपिणी
॥ ९७ ॥ कपिलस्यप्रियाकांताभारतेभारतीसती ॥ त्वंसीतामिथिलायांचत्वच्छायाद्रौपदीसती ॥ ९८ ॥ द्वारवत्यांम
हालक्ष्मीर्भवतीरुक्मिणीसती ॥ पंचानांपांडवानांचभवतीकलयाप्रिया ॥ ९९ ॥ रावणेनहृतात्वंचत्वंचरामस्यकामि
नी ॥ नानारूपायथात्वंचछाययाकलयासति ॥ १०० ॥ नानारूपस्तथाहंचस्वांशेनकलयातथा ॥ परिपूर्णतमोहंचपर
मात्मापरात्परः ॥ १०१ ॥ इतितेकथितंसर्वमाध्यात्मिकमिदंसति ॥ राधेसर्वापराधंमेक्षमस्वपरमेश्वरि ॥ १०२ ॥ श्रीकृ

ष्णवचनंश्रुत्वापरितुष्टाचराधिका ॥ परितुष्टाश्चगोप्यश्चप्रणेमुःपरमेश्वरम् ॥ १०३ ॥ ॥ इतिश्रीब्रह्मवैवर्तेम० चतुर्विंश त्यधिकशततोऽध्यायः ॥ १२४ ॥ ॥ श्रीनारायणउवाच ॥ ॥ श्रीकृष्णवचनंश्रुत्वाप्रहृष्टागोपिकामुदा ॥ मंदिरंप्रययुः सर्वाःप्रणम्यराधिकांप्रभुम् ॥ १ ॥ राधाशृंगारभावंचकलाषोडशपूर्वकम् ॥ चकारसस्मितासाध्वीवक्रचंचललोचना ॥ २ ॥ दत्वाचचंदनंमाल्यंस्वामिनेपुनरेवच ॥ रहस्यंचपरीहास्यंपुनरेवचकारसः ॥ ३ ॥ आकृष्यराधिकांकृष्णःसमानी यस्ववक्षसि ॥ ओष्ठाधरंकपोलंचगंडयुग्मंचुचुंबच ॥ ४ ॥ राधाचुचुंबकृष्णस्यमुखचंद्रंमनोहरम् ॥ चकारकृष्णंप्राणे शंबाहुभ्यांचस्ववक्षसि ॥ ५ ॥ शृंगारंषोडशविधंकामशास्त्रोक्तमीप्सितम् ॥ स्त्रीपुंसोस्तोषजनकंचकारभगवान्प्रभुः ॥ ॥ ६ ॥ नखविक्षतसर्वांगादशनेनाधरक्षता ॥ पुलकांचितदेहासातंद्रितावामनस्तनी ॥ ७ ॥ मूर्च्छितासुखसंभोगाद्विल म्राहतचेतना ॥ श्वासमात्रावशेषाचनिद्रामुद्रितलोचना ॥ ८ ॥ रतिशूराकोमलांगीकांतवक्षस्थलस्थिता ॥ शीतेसुखो ष्णसर्वांगीग्रीष्मेसासुखशीतला ॥ ९ ॥ शृंगारकालेमुखदासांद्रश्रोणीपयोधरा ॥ नितंबभारानम्राचप्रसंगसुखदायि का ॥ १० ॥ विदग्धारसिकाश्रेष्ठाकामुकीचवरांगना ॥ सहसाचेतनंप्राप्यशुश्रावकोकिलध्वनिम् ॥ ११ ॥ श्रुत्वापरमभी तासादीनादीनविशंकया ॥ उवाचपरमासाचपरमेशंपरात्परम् ॥ १२ ॥ बाहुश्रोणीयुगाभ्यांचनिबध्यचपुनःपुनः ॥ ॥ राधिकोवाच ॥ ॥ रासंगच्छमहाभागपुण्यंवृंदावनंवनम् ॥ १३ ॥ तत्रक्रीडांकरिष्यामिजलेनचस्थलेनच ॥ पुनर्या स्यामिमलयंसुंदरंमणिमंदिरम् ॥ १४ ॥ अपरंयद्रहस्यंवाजन्मनानश्रुतंमया ॥ तत्तद्यामित्वयासार्द्धमितिमेलालसापरा ॥ १५ ॥ परस्परैकालापेनप्रययौरजनीशुभा ॥ अरुणोदयकालेपिनत्यजेन्माधवंसती ॥ १६ ॥ माधवःप्रीतिवचसाबो

धयामाससाधनात् ॥ प्रातःकृत्यंततःकृत्वास्वारुरोहरथंहरिः ॥ १७ ॥ गोपीभीराधयासार्धंशरत्कमललोचनः ॥ योज
नायतविस्तीर्णंगृहैस्त्रिशतकोटिभिः ॥ १८ ॥ मणींद्रसारनिर्माणैर्ज्वलद्भिरुपशोभितम् ॥ गोलोकादागतंतत्रमनोयायिम
नोहरम् ॥ १९ ॥ सहस्रचक्रसंयुक्तंसहस्राश्वैःप्रचालितम् ॥ मणिस्तंभैस्त्रिकोटीभिरत्नराजिविराजितम् ॥ २० ॥ मुक्ता
माणिक्यपरमैर्हीरहारैःसुशोभितम् ॥ नानाचित्रैर्विचित्रैश्चश्वेतचामरदर्पणैः ॥ २१ ॥ वन्हिशुद्धांशुकैर्दीप्तैर्मालाजालैर्वि
भूषितम् ॥ रत्ननिर्माणतल्पैश्चपुष्पचंदनचर्चितम् ॥ २२ ॥ समानरूपवेषैश्चगोपीलक्षैःसमावृतम् ॥ रथेनतेनभगवान्पु
नर्वृंदावनंययौ ॥ २३ ॥ तत्रगत्वानिशाकालेविजहारजलेस्थले ॥ शृंगारंसुचिरंकृत्वावनेषूपवनेषुच ॥ २४ ॥ राधिकां
दर्शयामासयथासर्वंचनूतनम् ॥ विस्पंदकेसुरसनेमाहेंद्रेनंदनेवने ॥ २५ ॥ सुमेरुशिखरेरम्येपर्वतेगंधमादने ॥ शैलेशैले
सुंदरेचकंदरेकंदरेवने ॥ २६ ॥ पुष्पोद्यानेसुरहसिनद्यांनद्यांनदेनदे ॥ समुद्रपुलिनेरम्येपारिजातवनेवने ॥ २७ ॥ सुभद्रेपु
ष्पभद्रेचनारायणसरोवरे ॥ पवनस्यैवनिलयेमलयेचसुरालये ॥ २८ ॥ त्रिकूटेभद्रकूटेचपंचकूटेसुकुर्कुटे ॥ देवानांक
मनीयायांकांचन्यांचतथैवच ॥ २९ ॥ समुद्रेचसमुद्रेचद्वीपेद्वीपेमनोहरे ॥ स्वर्वरेप्रवरेरम्येपुण्यचंद्रसरोवरे ॥ ३० ॥ सु
पार्श्वेमुनिपार्श्वेचसरेमेरामयासह ॥ शीघ्रंचपुनरागत्यजंबूद्वीपंचपुण्यदम् ॥ ३१ ॥ द्वारकांदर्शयामासपर्वतंरैवतेतथा ॥
गोकुलंपुनरागत्यगोपगोकुलसंकुलम् ॥ ३२ ॥ तत्रदृष्ट्वाचभांडीरंपुण्यंवृंदावनंययौ ॥ श्रीकृष्णगमनंश्रुत्वायशोदानं
दएवच ॥ ३३ ॥ गोपीगोप्यश्चवृद्धाश्चाप्यश्रुनेत्रानिराकुलाः ॥ वारणेंद्रंपुरस्कृत्यवेश्यांचनटनर्तकाः ॥ ३४ ॥ पतिपु
त्रवतींसाध्वींब्राह्मणींब्राह्मणंतथा ॥ यथादेवाश्चवन्हिंचदृष्टानंदंचमातरम् ॥ ३५ ॥ आययुर्बालकृष्णश्चराधयासहमा

